॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका।
उत्फुल्लसुकृतिप्रसाधनधृतामोदोन्नदद्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम्॥

के. साम्बशिवशास्त्री.

# PREFACE.

This is the second part of Haramekhala, the first part thereof having already been published as No. 13 of Srī Citrodoya Mañjarī Sanskrit Series. My search for the procurement of a manuscript of the first Pariccheda has not yet been successful and so this volume embodying the fifth Pariccheda is being brought to light as such, due consideration being brought to bear on its usefulness to the public at large and on the delay in its publication.

The opening and concluding verses given below:—

विउलाइ महामइविरइआइ दट्ठूण गन्धसत्ताइ ।
अह पञ्चमो णिबन्धो विअड्ढदइओ परिच्छेओ ॥

(page 1)

इअ सपदि सम(न्तो ? त्तो) णाणाविअगन्धजोअपविओ ।
हरमेहलाए पुहअपञ्चमठाणो परिच्छेओ ॥

(page 77)

clearly manifest that the main theme is the preparation of various perfumes and toilets and consequently it seems that the title Vidagdhadayita is appropriate and highly suggestive of it. The commentator has epitomised the contents of the Pariccheda in the following stanzas:

सङ्ग्रहोऽयं प्रयोगाणां पञ्चमस्य निबध्यते ।
तत्रादौ मुखवासनविधिर्दन्तकाष्ठविधिस्तथा ॥

मधूच्छिष्टविधिर्नेत्रपरिकर्माञ्जनं तथा ।
मुखवासादि तैलानि तथोद्वर्तनसंविधिः ॥

अथ स्नानक्रिया स्नानं स्नानोपकरणानि च ।
पटवासादि वर्त्यश्च + सुगंधाद्रिसंविधिः ॥

कृतिः कस्तूरिकायाश्च चित्रगन्धास्तवक्रिया ।
कर्पूरकुङ्कुमनखा अगुरोः सिल्हकस्य च ॥

सहकारस्य च कृतिः शशिचैलार्गलिस्तथा ।
अयस्त्रुटिकुङ्कुमानां कृतयश्च यथाक्रमम् ॥

सहकार(रसेषु ? स्थैर्येषु)क्ति: सर्वपुष्पद्रुतिस्तथा ।
केतकीचम्पकादीनां द्रुतयश्च तथा पृथक् ॥

(page 77–78)

The opening Kārikā makes mention of many well-known works on perfumery. The content itself will suffice to show that the use of perfumes has been discussed elaborately with special reference to time and variety of substances and so I refrain from dwelling at length on the details thereof.

A gloss explaining the technical terms used in Haramekhala, as promised in the Kārikā,

गूढत्थवत्थुविवरणविअद्धिअसन्देहतिमिरणिरस्थो ।
हरमेहलाणहेऊक्कइ (?) दिणअरो सुन्दइ णिहम्णो ॥

(page 78)

occurring at the end of the Pariccheda is also appended herewith.

The following Kārikā indicates that the author himself has suggested another title, Vidagdhānurāgakṛti, to the work,

इअ एस परिसमप्पइ सुवण्णरअणुज्जला सुसन्धाणा ।
हरमेहला विअद्धाणुराअकइविहूअणामङ्का ॥

(page 87)

Māhuka defines Vidagdhas in the following lines:—

धम्मत्थकामजसोजीविआण जे साहणक्कतल्लिच्छा ।
ते भण्णन्ति विअद्धा ण उणा परवञ्चणमतग्गा ॥

(page 86)

Besides, the same lines point out that the *Adhikarins* to this work are those devoted to the fulfilling of *Dharma*, Artha, Kāma and Yaśas and who are also bent upon the collection of the necessary accessories. I have not yet set aside my endeavours to unearth a manuscript of the first Pariccheda, in spite of the futility of the attempts so far mad and I believe that my efforts will be duly crowned with success. The details regarding the work and its author have yet to be investigated. It is really gratifying to me that

this part is brought to light, in the form available. Praying for due encouragements in future as well, from Brahmāsrī C. Nārāyanan Bhaṭṭatiri Avl. of Tiruvalla (in Travancore), the owner of the manuscript, in my task of collecting manuscripts of all kinds, I place this work before the enlightened public.

Trivandrum,
15-9-1113.

K. SĀMBAŚIVA SĀSTRĪ,
*Curator.*

॥ श्रीः ॥

# निवेदना ।

इयानयं द्वितीयो भागो हरमेखलायाः । या श्रीचित्रोदयमञ्जर्यां त्रयोदशो गुच्छः प्रागिह प्राकाशि । अधुनापि प्रथमं परिच्छेदमसम्पाद्यैव पञ्चमे कृतदृष्टिरमुं प्रसाधयामि । बहूपकारक्षमोऽयं भागः कालान्तरक्षमो न भवतीति दृष्टिरमुष्य मे सफला ।

विउलाइ महामइविरइआइ दट्ठूण गन्धसत्थाइं ।
अह पञ्चमो णिबन्धो विअड्ढदइओ परिच्छेओ ॥

(पृष्ठम्. १)

इत्युपक्रमे —

इअए सपदि सम(न्तो ? त्तो) णाणाविअगन्धगोरवघविओ ।
हरमेहळाए पूहअपञ्चमठाणो परिच्छेओ ॥

(पृ० ७७)

इत्युपसंहारे च दर्शनाद् नानाविधगन्धसज्जीकरणमस्य मुख्यो विषय इति तदनुगुणतया परिच्छेदनाम च विदग्धदयित इति प्रतीयते । अत्र परिच्छेदे कृतानां प्रयोगाणामयं सङ्ग्रहो व्याख्यात्रा दत्तः —

सङ्ग्रहोऽयं प्रयोगाणां पञ्चमस्य निबध्यते ।
तत्राम्बुवासनविधिर्दन्तकाष्ठविधिस्तथा ॥
मधूच्छिष्टविधिर्नेत्रपरिकर्माञ्जनं तथा ।
मुखवासादि तैलानि तथोद्वर्तनसंविधिः ॥
अथ स्नानक्रिया स्नानं स्नानोपकरणानि च ।
पटवासादि वर्त्या च + सुगन्धादिसंविधिः ॥
कृतिः कस्तूरिकायाश्च चित्रगन्धासवक्रिया ।
कर्पूरकुङ्कुमनखा अगुरोः सिल्हकस्य च ॥
सहकारस्य च कृतिः शशितैलकृतिस्तथा ।
रुक्मतुरुष्ककुष्ठानां कृतयश्च यथाक्रमम् ॥

सहकार(रसैर्यु? स्थैर्ययु)क्तिः सर्वपुष्पद्रुतिस्तथा ।
केतकीचम्पकादीनां द्रुतयश्च तथा पृथक् ॥

(पृ० ७७,७८)

उपक्रमकारिकातः पूर्वं बहूनि गन्धशास्त्राणि प्रथितानीति स्पष्टमुच्यते । वस्तुविशेषान् समयविशेषांश्चोपधाय गन्धोपयोगो नैकप्रकारेणेह कीर्तित इति शक्यमवगन्तुं विषयानुक्रमणिकयेति न तदर्थं सद्यः प्रपञ्च्यते । परिच्छेदपरिसमाप्तिसमनन्तरं —

गूढत्थवत्थुविवरणविअड्डियसन्देहतिमिरणिउरुम्बो ।
हरमेहळाणहेक्कळइ(!)दिणअरो सुव्वइ णिहम्भो ॥

(पृ० ७८)

इति प्रतिज्ञया हरमेखलानिकायगतानां शब्दानां कोऽपि निघण्टुरपि सङ्कलितः प्रदर्श्यते ।

इअ एस परिसमप्पइ सुवण्णरअणुज्जळा सुसन्धाणा ।
हरमेहळा विअड्ढाणुराअकइविइअणामक्का ॥

(पृ० ८७)

इति कारिकया अस्या हरमेखलायाः विदग्धानुरागकृतिरित्यपरं नामधेयमङ्गीक्रियते । विदग्धांश्च माहुक एवं लक्षयति —

धम्मत्थकामजसोजीविआण जे साहणक्कतव्विळच्छा ।
ते भण्णन्ति विअड्ढा ण उणा परवञ्चणमतग्गा ॥

(पृ० ८६)

अनेन धर्मार्थकामयशोजीविते कृतप्रवृत्तयः सामग्रीसम्पादनसश्रद्धाः इहाधिकारिण इति सूच्यते ।

बहुधापि कृतप्रयत्नानामस्माकं प्रथमपरिच्छेदानुपलम्भं परिहर्तुमधुनापि परिश्रमो न पर्यवसितः । मन्ये कृतप्रयत्नानामुपलब्धिरचिरात् प्रसत्रा । ग्रन्थकर्तारं ग्रन्थं चास्पदीकृत्याद्याप्यवशिष्टमेव विचारणीयं पश्यामि । सर्वथा पृथासमयप्रतीक्षिभिरुपलब्धभागोऽप्यप्रसाध्य न प्राकाश्यमनीत इति तुष्यंस्तदंशे धन्यमात्मानं मन्ये । एवमेव बहून् ग्रन्थान् सम्प्रकीर्णानामस्माकं कृतो-

पक्कतिपु तिरुवल्ला मठाधी सी. नारायणन् भट्टतिरिसंज्ञकेष्वेतत्स्वामिष्ववशिष्ट-मपि प्रोत्साहनभरमभ्यर्थयन् सद्यस्तामिमं द्वितीयं भागं मेखलाया महाजनसमक्ष-मुपहरामि ॥

अनन्तशयनम्,
१५-९-११३.

के. साम्बशिवशास्त्री.

# विषयानुक्रमणिका ।

॥ श्रीः ॥

# हरमेखला

## सटीका ।

---

### (द्वितीयो भागः ।)

अथ पञ्चमः परिच्छेदः ।

विउलाइ महामइविरइआइ दट्ठूण गन्धसत्थाइं ।
अह पञ्चमो णिबन्धो विअड्ढदइओ परिच्छेओ ॥ १ ॥

विपुलानि महामतिविरचितानि दृष्ट्वा गन्धशास्त्राणि ।
अथ(था?) पञ्चमो निबन्धो विदग्धदयितः परिच्छेदः ॥

स्पष्टार्था गाथा । विपुलग्रहणेन संक्षिप्तं तु महाबुद्धिविरचितत्वेन सारत्वमिति ॥ १ ॥

दिअहे दिअहे जे जह कमे(ण) वचन्ति णिच्चमुवजोअं ।
छेआण ते तहच्चिअ भणिमो गन्धं समासेण ॥ २ ॥

दिवसे दिवसे ये यथा क्रमेण व्रज(न्तु?न्ति नित्यमु)पयोगम् ।
छेकानां (तान्) तथैव भ(णि?णा)मो गन्धान् समासेन ॥

ये (गन्धा) विदग्धानां सुरभिद्रव्याणि । ये यथा क्रमेण प्रातर्मध्याह्नादिकालविभागानामुपलक्षणार्थमिति ॥ २ ॥

कच्चूरकळ्ळवक्कळपिअंगुचुण्णेण कुणह जळवासं ।
तुळिअघणसारगन्धे (मि?मे)ळिअमत्ताळिणिगुरुंबं ॥ ३ ॥

कच्चूरकल्लवल्कलप्रियङ्गुचूर्णेन कुरुत जलवासम् ।
तुलितघनसारगन्धं मिलितमत्तालिनिकुरम्बम् ॥

कच्चूरं, कल्लमिति प्रसिद्धं, कल्लं मांसी, वल्कलं त्वक्, प्रियङ्गुः श्यामा, एतेषां समांशानां चूर्णेन मिश्रितेन तोयाधिवासं सम्पादयत तावच्चू-

B P. T. 2182 500 14-12 1111 B

र्णत्वेन नवि सर्वांशक्या (?) यावा तस्य तोयस्य सरसविकृति(र्नम ? र्नी)यते सौरभं चोत्पद्यते । शिष्टं गुणप्रतिपादनार्थं स्पष्टं विशेषणद्वयम् । मेलितं सङ्घट्टितमिति ॥ ३ ॥

सामाकइकच्छूर(कइ)सरिसभाएहिं विरइओ वासो ।
होइ विणिज्जिअकप्पूरपरिमळो कामिणीदइओ ॥ ४ ॥
श्यामाकपिकच्छूर(कपि)सदृशभागैर्विरचितो वासः ।
भवति विनिर्जितकर्पूरपरिमलः (कामिनीदयितः) ॥

पूर्वोक्तैरेव त्रिभिर्द्रव्यै(र्दा ? र्मा)सीपरिवर्तात् कपिना सिल्हकाख्येन समांशैश्चूर्णितैर्जलस्याधिवासनं सम्पादितम् उक्त(विशेषगे । ?)विशेषगुणातिशयं शृङ्गारिजनवल्लभं भवतीति ॥ ४ ॥

फ्ळिणीदळकेस(रु ? रेळु)प्पळासारकेअइदळेहि ।
जळवासो होइ विसइपाडलामोअपडिरूवो ॥ ५ ॥
फलिनीदलकेस(रो ? रैलो)त्पलासारकेतकीदलैः ।
जलवासो भवति पिशितपाटलामोदप्रतिरूपः ॥

फलिनी प्रियङ्गुः । दलं गन्धपत्रम् । केसरं नागकेसरम् । एला तुटिः । उत्पलं कुष्ठम् । असारं त्वक् । केतकीदलानि । रसण्डा हरीतक्यत्यैतैः समांशैश्चूर्णीकृतैरुदकाधिवास उक्तविशेषणविशिष्टो गुणो भवति पाटलपुष्पविशेष(गु)ण इति ॥ ५ ॥

ससिविद्धासारविसल्लिकंकुकमळेहि कुणह जळवासं ।
दळकुट्ठकेसरेळाचेअइचुण्णेण व सुअण्डं ॥ ६ ॥
शशिविद्धासारविसल्लिकङ्कुदलैः कुरुत जलवासम् ।
दलकुष्ठकेसरैलाचेतकीचूर्णेन वा सुगन्धम् ॥

शशि(ना) कर्पूरेण (सि ? वि)द्धैरत्यल्पमात्रदत्तसंस्कारैस्त्वञ्मांसीप्रियङ्गुकच्छूरैः समांशचूर्णितैरुदकाधिवासं राधयत । अथ समनन्तरं पूर्वगाथोक्तैस्त्वक्प्रियङ्गुरहितैर्जलवासं कुरुतेति द्वितीयप्रयोग इति ॥ ६ ॥

खज्जूरकुसुमचित्तअवद्दिरच्छल्लीए वासिअं सलिलं ।
तुडिनअर(कुपदअकमळे ? पत्तकुत्तळअमळए)हि व
[सुन्दरामोअं ॥ ७ ॥

खर्जूरकुसुमविस्तृतबाह्यत्वचा वासितं सलिलम् ।
तुटितगरपत्रकुवलयमलयैर्वा सुन्दरामोदम् ॥

नवखर्जूरस्य पिण्डः खर्जूरस्य प्रान्ते यानि पुष्पाणि उत्पद्यन्ते तेषां कोशरूपमाच्छादकं घनतलप्राय यद् भवति तद् विस्तृतशब्देन प्राकृत-भाषायां प्रसिद्धम् । तस्य बहिर्भागे गतं यद् वल्कलं तेन चूर्णितेनाधिवासितं जलं सुभगसौरभं, भवतीति (वि ?)शेषः । अ(वा ? थवा) एलाद्याख्यामालती(?)गन्ध-पत्रकुष्ठचन्दनैरधिवासितमेवं भवतीति ॥ ७ ॥

एळाणरेन्दच(न्द)ण(णव ? दळ)कुवळअवासिए जळे पीए ।
णीसरइ रोमकूवेहिं सामळो परिमळुग्गारो ॥ ८ ॥

एलानरेन्द्रचन्दनदलकुवलयवासिते जले पीते ।
निस्सरति रोमकूपै(र्हामळ ? रुद्दामः)परिमलोद्गारः ॥

समनन्तरगाथापरार्धोक्तस्य प्रयोग(स्य) फलान्तरप्रतिपादनार्थं पुनरस्यां गाथायां तान्येव द्रव्याण्युदीरितानि । फलान्तरं च — तदधिवासिते जले पीते सति समस्तकायवेधकत्वाद् रोमकूपकेभ्यः सौरभविजृम्भोद्गम इति । उदक-विधिः ॥ ८ ॥

सकसाअतरुब्भवमण्णं वा मउअकुचअमणिण्णं ।
दन्तपवणसारसुरापिअंगुरसवारिकअळेवं ॥ ९ ॥
कअधूवमाळईकुसुमवाससंधिसेसवड्ढिआमोदं ।
होइ णराहिवजोग्गं थिवडिअमुहरोअमाहप्पं ॥ १० ॥

सकषायतरुसम्भवमन्यद् वा मृदुकूर्चमनिन्द्यम् ।
दन्तपवन(म)सारसुराप्रियङ्गु(रस)वारिकृतलेपम् ॥
कृतधूपमालतीकुसुमवासवधिवेधवर्धिता(मोदम्) ।
भवति नराधिपयोग्यं विघटितमुखरोगमाहात्म्यम् ॥

दन्तपवनमीदृशं राजोचितं तथा सदस्तस्य(?) व्याधिप्रभावनिवर्तकं भवति । कीदृशम् । कषायरसप्रधानवृक्षजटा(भव)मन्यद् वा कटुतिक्तरसप्रधानवृक्षजं, तथा निर्दलिताग्रत्वान्मसृणकूर्चप्रायमुखं, तथा अनिन्द्यं निषिद्धवर्ज्यं, तथा त्वक्-सुगन्धसुराश्यामाबोलवालकै(र्जलैः) सूक्ष्मपिष्टैर्लिप्तगात्रं, तथा कृतधूपैर्दद्यमाण-

धूपाधिवासितैः सुमनःपुष्पैर्योऽधिवासस्तथा कर्पूरेण यो वै स्वल्पमात्रया संस्कारस्ताभ्यां विशेषसौरभम् । लेपादीनां वे(घस्ता ? धान्ता)नां यथाक्रमं विनियोग इति ॥ ९, १० ॥

**गोसलिलवासिअगहिअधूविअमचन्तमुग्गधूएहिं ।**
**तअमरिअकेसरेळागुण्ठिअमइसुरहिं दन्तपवणं ॥ ११ ॥**

गोसलिलोषितगृहीतं धूपितमत्यन्तमुग्रधूपैः ।
त्वचमरिचकेसरैलागुण्ठितमतिसुरभि दन्तपवनम् ॥

उक्त(वृक्ष)जातमक्षुण्णाग्रं दन्तधावनमेवंविधं सदातिसुगन्धि भवति । कीदृशम् । गोमूत्रपर्युषितं सत् ततो गृहीतं, ततो वक्ष्यमाणैरुत्क्रमामेदैर्गुग्गुल्वादिभिर्धूपैरतिशयेनाधिवासितं, ततः असारोपणनागकेसरत्रुटिभिरेते(रितर ? रति)सूक्ष्मचूर्णितैः । अर्धचूर्णमिश्रितामिति ग्रन्थान्त(रं ? र)पठितादितो दन्तधावनवि(धि ? धे)रिहानुक्तं यत् तदुपा(दे)यमिति स विधिर्लिख्यते —

"वटासनार्कखदिरकरञ्जकरवीरजम् ।
पङ्का(नीमेदोऽ ? रिमेदा)पामार्गमालतीकुसुमोद्भवम् ॥
कषायतिक्तकटुमूल्य(मन्य)दपीदृशम् ।
विज्ञातवृक्षे क्षुण्णाग्रन्थिसुश्रमिजम् (?) ।
कनिष्ठाग्रसमस्थौल्यं सुक्षत्रं द्वादशाङ्गुलम् ।
प्रातर्भुक्त्वा न यवका भक्षयेद् दन्तधावनम् ।
चव्याग्निवर्गत्रितयां क्षौद्राद्रां तेन च घर्षयेत् (?) ।
शनैस्तेन ततो दत्वा दन्तमांसक्रियाद्वयम् ।
लिखेदनुमुखं जिह्वां जिह्वानिर्लेखनेन च ।
तथास्यमले वैरस्य गन्धा जिह्वास्यदन्तजा (?) ।
रुचिवैशद्यलघुता न भवन्ति भवन्ति च ।
नाद्यादजीर्णवमथुश्वासकासक्षयादि(मान्) ।
तृष्णास्यपाकहृन्नेत्रशिरःक(र्ण ? र्णा)मयी च तत् ।
नैव श्लेष्मातकाभृष्टविभीतक + + + वन् ।
बन्धनं बिल्वपल्लवनिर्गुण्डीशिग्रुतिन्दुकाः ।
कोलीदारुशमीपीलु पिप्पली चैव गुग्गुलु ।
पारिभद्रकमल्लिकादेवया शल्मली शनैः (?) ।

स्वाद्वम्ललवणं शुष्कं सुषिरे पूतिपिच्छिलम्।
पालाशसमानं दन्तधावनं पादुके त्यजेत्।
दन्तात् पूर्वीमथो धर्मे प्रतिषिद्धे च लोचने।" (?)

दन्तकाष्ठविधिः ॥ ११ ॥

**धणि(आ)तिअडुअतिसुअन्धकुट्टघणचुण्णकुसुमसारेहि।**
**कवलग्गहे सुअन्धं कुणइ मु(ह? हं) रोअरहिअञ्च ॥ १२ ॥**

**धान्याकत्रिकटुकत्रिसुगन्धकुष्ठघनचूर्णकुसुमसारैः।**
**कवलग्रहः सुगन्धि करोति मु(ख? खं) रोगरहितं च ॥**

कवलस्य द्रव्यान्तरस्यास्यक्षालनार्थस्य द्रव्यस्य स्वीकारः आस्यसौरभं, नीरोगत्वं च करोति। कीदृशः। कुस्तुम्बुरीफलानां तथा त्रिकटुकस्य शुण्ठी-मरिचपिप्पलीनां ततस्त्रिसुगन्धस्य त्वगेलागन्धपत्राणां तथा वाप्यस्य मुस्तस्यैषां समानांशेन चूर्णेन माक्षिकेण सह कवलयोग्येन वा कृतः। कवलस्य लक्षणम्—

"असञ्चार्ये मुखे चूर्णं गण्डूषः कवलोऽन्यथा।"

तेन सञ्चारेण योग्यमास्यगतं जलादि कवलमुच्यत इति कवलग्रहणम्॥ १२॥

**जत्तीएसुतणुलित्तम्मीसिअम्मलिणाविलेवणअं।**
**वलिअमइवउरविद्दुमपिण्डअदेहअं ॥ १३ ॥**
**दद्दरवधूविअञ्च सुरभिपसूअसुअन्धअं।**
**सित्थअमिणमोलवंगतिहलामदसंसिद्धं (?) ॥ १४ ॥**

... ... .... ... ... ।
... ... .... ... .... ॥
.... ... .... ... .... ।
.... .... .... .... .... ॥

इदं सिक्थकमधरप्रसाधनोपयोगि मधूच्छिष्टम्। कीदृशम्। वक्ष्यमाणेन केनचित् सुगन्धेन *तैलमिश्रितं कृत्वा (यथा) न दह्यते तथा मृद्वग्निना विलीनमसृतं* ततो गलितं तत्प्रसूतेन जलेन वर्तितं, ततः अघनात्मकमनाश्यानमेव दर्दरकवक्ष्य-माणे विधाने शास्त्रवच्छन्नमुखेऽन्तःकफा वक्ष्यमाणसुगन्धधूपद्रव्यभाण्ड उद्गत-बाष्पगि .... द्विधानवस्त्रस्थं (?) संधूपितमधिवासितं तत्सुगन्धिभिः सुमनःप्रभृ-तिभिः पुष्पैरप्यधिवासितं ततो लवङ्गेन कुसुमेन तथा त्रिफलया जातिफलककोल-

कटुफलासिकया गन्धत्रिफलया तथा मदेन कस्तूरिकया तथा शशिना कर्पूरेणैतैः समांशैर्वृद्धं कृतसंस्कारम् । एवं प्रयोगे सिक्थकेन पूर्वं तनुलेपेनाधरं मसृणीकृत्य पश्चादलक्तकादिना रागेण रञ्जयेदि(त्य ?)ति विधिरिति ॥ १३,१४॥

म(अण ? ळअ)मिअंकेळादळविसाणमहुकेसरेहि समतुलिअं ।

कअचुण्णं सोवीरञ्जणमइसुरहि पसिद्धं ॥ १५ ॥

मलयमृगाङ्कैलादलविषाणमधुकैः समतुलितम् ।

कृतं चूर्णं सौवीराञ्जनमतिसुरभि प्रसिद्धम् ॥

सौवीराञ्जनं नीलाञ्जनं, यस्य पिष्टमतिसुगन्धि मङ्गल्ये च अञ्जनं 'नेत्रप्रसाधनं भवतीति । कीदृशम् । चन्दनकर्पूरतुटिसुगन्धपत्रकुष्ठमधुयष्टिनागकेसरैः परस्परसमांशैः सूक्ष्मपिष्टैः समतुलितं, यावन्त्येतानि सर्वद्रव्याणि तावत्परिमाणं तावदिति ॥ १५ ॥

कक्कोळअपूअफळखइरकसणाहि फळसमाणेहि ।

जाईफळकसीसुम्मीसणाहि सहआरमळणाहि ॥ १६ ॥

दप्पमिअंकारुणवल्लीकोसादळमळअभाएहि ।

दोमासिए सुरणाहवल्लहं कुणह मुहवासं ॥ १७ ॥

(कक्कोलकपूगफलखदिरकपर्णैः पलसमानैः ।)

जातीफलकर्पैन्मिश्रितैः सहकारमिलितैः ॥

दर्पमृगाङ्कारुण(फल ?)वल्लीकोशदलचान्द्रभागैः ।

द्विमाषैः सुरनाथवल्लभं कुरुत मुखवासम् ॥

एतैर्द्रव्यैः पुरन्दरप्रियमास्याधिवासितं गुलिकां साधयत । कैः । कक्कोलकेन कंलकेन तथा पूगफलेन तथा खदिरं क्वाथयित्वा गृहीतेन घनेन तत्सारेणैत्यैतैः प्रत्येकं प्रकुञ्चपरिमाणैः । कीदृशैः । जातीफलस्य मालतीफलाण्डस्य विलालपदकेन सहितैस्तथा सहकारेण सुरसेन गुडकारणक्षेपण भावितैस्तथा दर्पस्य मृगमदस्य तथा मृगाङ्कस्य कर्पूरस्य तथारुणस्य कुङ्कुमस्य वल्ल्या लताकस्तूरिकाया(तथा को(ल ? श)स्य जातिपत्रिकायास्तथा जलस्य विल्लकस्य तथा मल(य)स्य (चन्द)नस्य तथा ताम्रस्य त्वचस्य भागैः समांशैः । किंप्रमाणैः ! माषद्वयपरिमाणैः । माषकं मानचतुर्भाग इति ॥ १६, १७ ॥

कमपरिवड्ढिएहिं तणुतुडिविसलिलकच्चूरलोहघुसिणेहिं ।
घणमलअमालईफल(च)लवंगकक्कोलचन्देहिं ॥ १८ ॥

...  ....  ....  ...  .... ।

....  ....  ....  ....  .... ॥

अर्धांशिकैः क्षीरिणीकुन्तीसितामिश्रैस्तैः समदैः संपिण्डितपूगफलसहकाररसैर्मुखवासः । एतैर्द्रव्यैर्मुखवास आस्याधिवासनं गुलिकारूपं भवतीति शेषः । असारैलामांसीकमलागुरुकाश्मीरकैरेतेन न भागः परिमाणैः सर्वैः समांशैस्तथा । कीदृशैरेतैः । घनादिभिस्तु काश्मक्षीरीगूढदोलासितशर्करा कस्तूरिकाभिरर्धाभिरेव सहितैस्तथा गुलस्य ··· ···स्याभागो फलाप्रासो येषां तैरउथाविधैर्यत्परिमाणानि त्वचादीनि सर्वाणि सदन्तानि सर्वद्रव्याणि तावत्परिमाणं पूगफलचूर्णं सहकाररसार्द्रीकृतमत्र देयमित्यर्थः (?) ॥ १८ ॥

सोलह कक्कोलआणं सयमअपञ्छलताआण एक्केक्कस्स ।
सणहआहिअणारुणकोसभाविअविउणलवंगमीसिआ [॥ १९ ॥

पिक्काफलमूरअम्मिसुहसहआररसोल्लिआ ।
विहिविरइअसुकुसुमवासाविविहमवसरन्तसानलामोओ ।
मुहवासो सुरवहुणवअणकमलमअरन्दसन्देहो ॥ २० ॥

षोडश कक्कोलकानां समृगलाञ्छनभागकाः जातीफलमृग- [मदयोरेकैकशः ।
सनाथका त्रिगुणकोशभागद्विगुणलवङ्गोन्मिश्रकाः ॥
पक्वाः फलपूरके शुभसहकारसार्द्रकाः ।
विधिविरचितकुसुमवासविविधप्रसरमांसलामोदः ।
मुखवासः सुरवधूवदनकमलमकरन्दसन्दोहः ॥

एवंविधा भागा मुखवासो भवतीति सम्बन्धः । कीदृशो भागः । कक्कोलकोशसम्बन्धी षोडशभागस्तथा मृगलाञ्छनस्य कर्पूरस्यार्धभागः तैः । कीदृशाः । मालतीफलकस्तूरिकयोः प्रत्येकमेकेनैकेन भागेनाशेन युक्ताः । तथा त्रिगुणेन भागत्रयपरिमाणेन कुङ्कुमेन तथा कोशस्य जातीफल(प)त्रिकाया भागेनैकेनांशेन तथा द्वित्रिगुणेन भागद्वयपरिमाणेन लवङ्गेन देवकुसुमेन

लवङ्गस्य देवकुसुमस्य शैलसङ्ख्या सप्त । तथा कोशस्य जातिपत्रिकाया ऋतुसङ्ख्या षड्भागाः । एते दश कीदृशाः, पञ्चगुणेन भागपञ्चकपरिमाणेन जातीफलेन तथा कच्चूरस्य कललस्य चतुर्गुणैर्भागचतुष्टयपरिमाणैः रसैः संयुक्ताः । एवंविधा भागाः सर्वे चूर्णीकृताः सन्तः सहकारतैलेनाम्ररसेन पश्चाद् भाविता गुलिकायोग्यत्वमापादिता इति । कुलकम् ॥ २१—२३ ॥

मअतुहिणेळावक्कळतिहळाहळघुसिणळयालिकोसेहिं ।
समळअसहआररसेहिं माउलुंगोअरे पिक्कं ॥ २४ ॥

केअइविरइअवासं पसवन्तुद्दाममंसळामोअं ।
ण फळन्ति पारिआअमसारिअपव्वईणाहा ॥ २५ ॥

मदतुहिनैलावल्कलत्रिफलादलघुसृणलयलिकोशैः ।
समलयसहकाररसैर्मातुलुङ्गोदरे पक्वम् ॥

केतकिविरचितवासं (स?)प्रसरदुद्दाममांसलामोदम् ।
न लभन्ते पारिजातमप्रसादितपार्वतीनाथाः ॥

पारिजाताख्यमपरमिमं मुखवासमनासादितगौ(र? रीनाथ)वाल्लभ्या नराः (न) प्राप्नुयन्तीति । कीदृशम् । पूर्वोक्तयुक्त्या बीजपूराभ्यन्तरे पक्वम् । कैर्द्रव्यैः, मेदेन कस्तूरिकया तुहिनेन कर्पूरेण तथा तुव्या तथा त्वचा तथा पूर्वोक्तगन्धत्रिफलया तथा गन्धपत्रेण तथा कुङ्कुमेन तथा लताकस्तूरिकया तथा जातिपत्रेण इत्येतैः समांशैश्चन्दनागरुसहितैश्चन्दने पूर्वोक्तद्रव्यसमांशेनैव आम्ररसेनैव समस्तद्रव्यचूर्णभावनायोग्येन एवं भावितं पक्वं सत् सप्तातुलुङ्गात् पूर्ववत् दत्ताधिवासमत एव विकसत्सान्द्रसौरभम् । युगलकम् ॥ २४,२५ ॥

ळवलिळवंगहिमागरुकोसारुणवेणुमअचिसळ्ळीहिं ।
मच्छण्डिमाळईफळवेणुब्भवसरिसभाएहिं ॥ २६ ॥

जळणिहिसममअळच्छणविउणादिण्णकक्कोळा ।
कक्कोळअत्तिउणकसाअमीससहआरतेळोळ्ळा ॥ २७॥

एआओ मअरद्धअकण्णीसुअजवणकामिणीपिआइ ।
सेवेइ खदिरगुळिआ देवहिअदिण्णसेसाओ ॥ २८ ॥

लवलीलवङ्गहिमागुरुकोशागुरुवेणुमदसह्लीभिः ।
मत्स्यण्डिकामालतीफलवेणूद्भवसदशभागैः ॥
जलनिधिसममृगलाञ्छनद्विगुणदत्तकक्कोलाः ।
फक्कोलत्रिगुण(कषाय)मिश्रसहकारतैलार्द्राः ॥
एता मकरध्वजकर्णीसुतयवनकामिनीप्रियाः ।
सेवध्वं खदिरगुलिका देवद्विजदत्त(शोभा ? शिष्टाः)॥

खदिरगुलिकाः खदिरसारचूर्णप्रधानमुखवासगुलिका भजध्वम् । कीदृशीः । उत्कृष्टामोदत्वाद् मदनमूलदेवयवनयुवतिदयिताः । तथा सुरविप्रादिभ्यः प्रतिपादितशिष्टाः । कैर्द्रव्यैः साधिताः । लताकस्तूरिकादेवकुसुमचन्दनजातिपत्रिका-कुङ्कुमदन्तीकस्तूरिकागन्धमांसीभिः, तथा सितशर्करया जातीफलतुकाक्षीरिणां समैरंशैः । कीदृशी गुलिकाः । जलनिधिसमाद् भागचतुष्टयस्य परिमाणात् कर्पूराद्विगुणानि कोलफलानि या (लः ? सु)ताः । तथा कक्कोलकत्रिगुणेन कषायेण पूर्वोक्तयुक्त्या गृहीतेन खदिरसारेण मिश्रितं यत् सहकारतैलं तेनार्द्रा(ः) । सद्रवचूर्णताप्रसरेनार्द्रीकृत्य(?) वा ताः कार्या इति तात्पर्यमिति । कुलकम् ॥ २६ — २८ ॥

समकअलळोयक्कळवंकदळघुसिणसंखचुण्णेहि ।
विउणफळातिगुणमअदप्पकोस(क)क्कोळभाएहि ॥ २९ ॥
सत्तगुणपिअंगुम्मिसखइर(मसि ? )पञ्चासभाअरइआओ ।
जाअन्ति खइरगुळिआओ चारुसहआरमळिआओ ॥ ३० ॥

(समकर्चूरैलावल्कलवङ्गदलघुसृणशङ्खचूर्णैः) ।
द्विगुण(मा ? फ)लत्रिगुणमृगदर्पकोशकक्कोलभागैः ॥
सप्तगुणप्रियङ्गून्मिश्रखदिरपञ्चशेषपद्भागैः ।
जायन्ते खदिरगुलिकाश्चारुसहकारमलिनाः ॥

जायन्ते(?) । कैर्द्रव्यैः । कर्चूरतुटित्वग्देवकुसुमगन्धपत्रकुङ्कुमनखानां चूर्णैः समांशैस्तथा द्विगुणैर्भागद्वयपरिमाणैर्जातीफलाण्डैस्तथा त्रिगुणैः प्रत्येकं भागत्रयपरिमाणैः कस्तूरिकाजातिपत्रिकाकोलफलानामंशैः । कीदृश्यो गुलिकाः सप्तगुणया भागसप्तकपरिमाणया मिश्रस्य खदिरकषायचूर्णस्य भागैर्निचितास्तद्-द्रव्यसहिताः खदिरचूर्णसहिताः सत्यश्रेष्ठताः(?) श्रीरसनालोलिता इति । युगलकम् ॥ २९,३० ॥

गुरुमळअसिआहरेणुफळदप्पारुणकोसआ ।
सहखीरीइलंगएहि का(द)व्वा समभाअआ ॥ ३१ ॥

दत्ताणि मिअंकस्स तेच्चिअ तक्कोळसआ ।
सोळह खइरुब्भवस्स तेळोल्ला मुहवासइ ॥ ३२ ॥

गुरुमलयसिताहरेणुफलदर्पारुणकोशकाः ।
सहक्षीरिलवङ्गकाभ्यां कर्तव्याः समभागाः ॥
चत्वारो मृगाङ्कस्य च त एव कक्कोलांशका(च? श्च) ।
षोडश खदिरोद्भवस्य तैलार्द्रा मुखवासे ॥

द्रव्याणां भागा एवं देया इति सम्बन्धः । कथम् । गुरु अगरु । मलयं चन्दनम् । तथा सितशर्करा, तथा हरेणुः, तथा कुन्तीफलं जातीफलं, तथा दर्पो मृगमदः, तथा कुङ्कुमं, तथा जातिपत्रिका एतानि समांशानि कार्याणि । तुकाक्षीरिदेवकुसुमाभ्यां सह ते अपि समांशे एव कार्ये इति । तथा चत्वारो भागाः कर्पूर(स्य ।) त एव चत्वार एव कोलफलस्य । तथा खादिरचूर्णकषायचूर्णस्य षोडश भागाः । एतैः समैश्चूर्णिताः सन्तः सहकारतैलार्द्राः कार्या इति मुखवासविधिः ॥ ३१, ३२ ॥

सजळाइ पुरा(सह ? ण)मट्टिआइ पाऊण पच्चंति उणोवि ।
घणसामाअदळवक्कळतिसिणमन्दानळं विहिणा(?) ॥ ३३ ॥
तेळळं सुअन्धं सेअं धूइअपअट्टं सन्धसञ्जुत्तं(?) ।
खअसूरकिरणताविअं होइ परं पक्खरूत्तेण ॥ ३४ ॥

सजलया पु(नाम्यन्ति ? राणमृत्ति)कया पक्वाः पच्यन्ते पुनरपि ।
घनश्यामाकदलनकलमसितिर्मन्दानलं विधिना(?) ॥
तैलं सुगन्धमेवं धूपितमष्टाङ्गसंयुक्तम् ।
खरसूर्यकिरणतापितं भवति परं पक्षमात्रेण ॥

इहाग्निपाकसाध्यानि द्विविधानि सुगन्धतैलानि उपदिश्यन्ते । तत्र सूर्यपाकसाध्यं तैलमुपदिशन् (सर्वसुगन्धितैलान्युपदिश्यन्ते तत्र सूर्यपाकसाध्यं तैलमुपदिशन् !) सर्वसुगन्धितैलानां विधिं व्यवस्थापयति । मृत्तिकया वाल्मीकया परमपुराणगृहभित्तिजया वा षोडशगुणेन सहितया वा चतुर्गुणे तैलं पक्त्वा ततो

मृत्तिकामपास्य तत् तैलं मुस्ताश्यामातगरगन्धपत्रत्वक्शतपुष्पानिर्गर्भनिस्ताभिः(?) षोडशगुणजलसहिताभिः सह मृद्वग्नौ यथोक्तेन विधानेन पुनरपि क्वाथ्यन्ते, द्वितीय एव पाको देय इत्यर्थः। एतौ च द्वौ पाकौ यथोक्तैर्द्रव्यैः सर्वसुगन्धितैलानां पूर्वमवश्यं देयौ। (त)तो यदीय वर्णेच्छा भवति, तद्वर्णार्थं वक्ष्यमाणविधिना तृतीयः पाको देयः। ततः सूर्यपाकसाध्यमभीष्टं चेतदेतदेव तत्सुगन्धितैलं वक्ष्यमाणधूपानामन्यतमेन धूपितं स्वपरिमाणाद् अष्टभागमात्रेण गन्धद्रव्येण मिश्रितं सत् तीक्ष्णसूर्यांशुक्वथितं पञ्चदाहेन श्रेष्ठमुपयोगित्वं सम्पद्यते। वह्निपाकसाध्यं या तैलं स्यात् तद्वर्णपाकादनन्तरं यथा। वक्ष्यमाणोऽग्निकार्यविधिः प्रयोक्तव्य इति व्यवस्थाप्य तदानीं तद्वर्णविधानार्थमाह। युगलकम्॥

काळेअमहुअसुवण्णच्छल्लिपुण्डरीअसाहिअं होइ।
तुलिअकळधोअसोअं तेळ्ळं लट्टहंगणादइअं॥ ३५॥
कालेयमधुसुवर्णच्छल्लीपुण्डरीकसाधितं भवति।
तुलितकलधौतशोभं तैलं लडहाङ्गनादयितम्॥

तैलं सुगन्धि साध्यं वर्णयुक्त्यानया स्पर्धितकाञ्चनकान्ति सम्पद्यते। कीदृशम्। सकालेयकेन पीतसारेण तथा मधुकेन मधुयष्ट्या, तथा सुवर्णच्छल्ली निष्पर्याया प्रसिद्धा तया, पु(ण्ड)रीकेन चाक्षुष्यैरेतैर्द्रव्यैः पूर्वोक्तपाकद्वयानन्तरं गन्धन्यस्ते षोडशगुणजलसहितैः साधितं पक्वं, तच्च सुगन्धं वनितावल्लभमिति॥ ३५॥

द्वितीयमिलितमाह —

पत्तंगरत्तचन्दणमञ्जिट्ठाहिंगुळोअलक्खाहिं।
पिक्कं तेळ्ळं कंकेल्लिकुसुमच्छाअं स(मु)व्वहइ॥ ३६॥
पत्तङ्गरक्तचन्दनमञ्जिष्ठाहिङ्गुलुकलाक्षाभिः।
पक्वं तैलं कङ्केल्लिकुसुमच्छायां समुद्वहति॥

एतैर्द्रव्यैः पूर्ववत् पक्वं सत् तैलमशोकपुष्पाणां विचिन्त्यते(?) लोहितं भवतीति। पत्तङ्गेन पट्टरागेण, तथा रक्तचन्दनेन रक्तवल्ल्या, तथा हिङ्गुलुकेन दरदेन, तथा लाक्षया द्रुमव्याधिनैतैः समाहारैर्गर्भन्यस्तैरिति॥ ३६॥

अथ वर्णविधेरनन्तरं सर्वद्रव्याणां गन्धनेऽन्भावनं नियतिगतमाह —

इअ पीअमरुणमहवा वण्णं उप्पाइऊण तेळ्ळस्स।
पच्छाओ साहिज्जइ सुगन्धआ गन्धजोएहिं॥ ३७॥

इति पीतमरुणमथवा वर्णमुत्पाद्य तैलस्य ।
पश्चादुत्पाद्यते सुगन्धिता गन्धयोगैः ॥

यस्यकस्यचित् तैलस्य पूर्वं दत्त्वा वक्ष्यपाकद्वयस्येत्युक्तेन क्रमेण हारिद्रं लोहितं वा वर्णं जनयित्वा वक्ष्यमाणसुरभिद्रव्यसम्बन्धैः सुरभितं सुगन्धितैलं जन्यत इति ॥ ३७ ॥

**कलिकुडिलासार(विसाण)कंकुबिउणं तुरुक्खजलतिउणं ।**
**चम्पअतिल्लं तुडिकललदेविभा(ह्वीएहि) सञ्जुत्तं ॥ ३८ ॥**

करिकुटिलासारविषाणकङ्कुद्विगुणं तुरुष्कजलत्रिगुणम् ।
चम्पकतैलं तुटिकललदेविभागैः संयुक्तम् ॥

इदं चम्पकतैलं चम्पककुसुमसौरभत्वाचम्पकगन्धोपलक्षितं तैलमेवं भवति । *करी नागकेसरम्* । *कुटिलं तगरम्* । *असारं त्वचम्* । *विषाणं कुष्ठम्* । कङ्कुः प्रियङ्गुः । (एतानि ? एतेषां) द्विगुणभागार्धेन संयुक्तम् । अनुक्तविशेषाणां तैलानां शुद्धाम्बुपाकक्रमेणैव यद्यपि पाकविधिः, तथाप्यग्निपाकसाध्यमानेन दुष्यतीति ॥ ३८ ॥

**कविकुडिलवक्कलकल्लमालाजलकणअकामिणीबिउणं(?) ।**
**तुडिघणविसाणतिउणं चम्पअतेल्लं घणामोअं ॥ ३९ ॥**

कविकुटिलवल्कलमालाजलकक्कलकामिनी(द्विगुणम् ।
तुटिघनविषाणत्रिगुणं चम्पकतैलं घनामोदम् ॥)

घनामोदमिदमपरं सान्द्रसौरभं चम्पकतैलम् । कीदृशम् । सिल्हकमांसीतगरत्वचस्पृक्कावालकप्रियङ्गुलोध्रा द्विगुणा भागद्वयपरिमाणा यत्र तत् तथा । एलामुस्तकुष्ठं त्रिगुणं त्रिभिर्भागैर्यत्र तत् तथेति ॥ ३९ ॥

**तिउणतुडितअरवक्कलपिअंगुसलिलेहि चम्पअसुअन्धं ।**
**तेल्लं समकुठ्ठलवङ्गकुन्तिदलकोलभाएहि ॥ ४० ॥**

त्रिगुणतुटितगर(दल ?)वल्कलप्रियङ्गुसलिलैश्चम्पकसुगन्धि ॥
तैलं समकुष्ठलवङ्ग(द ? कु)न्ति(दल)कोलभागैः ॥

तृतीयमिदं चम्पकवत् स्वामोदितं तैलम् । कैर्द्रव्यैः । प्रत्येकं भाग(द्व ? त्र)यपरिमाणैरेला(तुटि ? तगर)त्वचश्यामावालकैस्तथा समैस्तुल्यैर्विषाणेन देवकुसुमहरेणुगन्धपत्रतकोलानां भागैरिति ॥ ४० ॥

**समतुलिअकुवलणळासामामिसिकणअकेसरसणाहं ।**
**ळहुइअचम्पअगन्धं खर(हिस ? रविअ)रभाविअं तेळ्ळं ॥**

समतुलितकुवलयैलाश्यामाकमिसिकनककेसरसनाथम् ।
लघूकृतचम्पकगन्धं खररविकरतापितं तैलम् ॥

इदं सातिशयत्वादल्पीकृतचम्पकसौरभं चतुर्थं चम्पकतैलं हेमन्तशिशिरयोर्वासमात्रं देयमिति ॥ ४१ ॥

**समदळकुवळअमासारतुडि(कुंती)कामिणीविउणा ।**
**दळकळिल(अ ?)कुडिळतिउणं तेळ्ळमिणं मल्लिआमोअं ॥**

समचलणमासारतुडिकुन्तीकामि(णी ? नीं)द्विगुणम् ।
दलकललकुटिलत्रिगुणं तैलमिदं मल्लिकामोदम् ॥

इदं मल्लिकानाम्नः पुष्पविशेषस्य तुल्यसौरभं तैलम् । कीदृशम् । समानि तुल्यांशानि त्रिभिस्त्रिभिर्भागैः प्रत्येकं गन्धमांसी यत्र तत् तथा । द्विगुणानि प्रत्येकं द्वाभ्यां भागाभ्यां त्वगेलाहरेणुप्रियङ्गवो यत्र तत् तथा । प्राकृते पूर्वनिपात एवमत्रापि विज्ञायत इति ॥ ४२ ॥

**जळकळिलकुटिळकुवळअळेळासारक(त्ति ? कङ्कु)कुन्तीहिं ।**
**विउणदळमद्ध(मासं ससिपादं)माळईतेळ्ळं ॥ ४३ ॥**

जलकललकुटिलकुवलयकलेलासारकरूट्कुकुन्तीभिः ।
द्विगुणजलमर्धमासं शशिपादं मालतीतैलम् ॥

इदं मालत्याः सुमनसः तुल्यामोदं तैलम् । कैर्द्रव्यैः । वालकमांसीतगरकुष्ठकर्पूरतुटित्वचप्रियङ्गुबृहदेलाभिः । कीदृशम । द्विगुणं जलं द्वाभ्यां गन्धपत्रं यत्र तथा सर्वेण भागार्धेन स्पृक्का यत्र तथा कर्पूरभागश्चतुर्थः भागो यत्र तत् तथेति ॥ ४३ ॥

**चळजळविसाणवकळसामारुणकुडिळकेसरमुराहिं ।**
**तुडिमीसिआहिं तेळ्ळं विसट्टकोन्दट्टप(डिइ ? टि)रूवं ॥ ४४॥**

चलदलविषाणवल्कलश्यामारुणकुटिलकेसरमुराभिः ।
तुटिमिश्रिताभिस्तैलं विकसितोत्पलप्रतिरूपम् ॥

इदं विकोशकुवलयसमानामोदं तैलम् । कैर्द्रव्यैः । तुरुष्कवालुककुष्ठसारकामिनीकुङ्कुमतगरकेसरसुगन्धमुराभिरेलामिश्रिताभिः समांशाभिरिति ॥

दळवा(लिण)लिणीतुडिरसकुन्तिसुरासारफअळमांसी-
[(सरिसं ? हि) ।
ससिचिद्धं बिउणतमालिदारिगरकुवलअं वउलतेळ्ळ-
[मिणं ॥ ४५ ॥

वरवारिनलिनीतुटिरसकुन्तिसुरासारपलमांसीभिः ।
(कीदृशं ?)
शशिचिद्धं द्विगुणतमालवारिगरकुवलयं वकुलतैलमिदम् ॥

इदं कुवलयानां केसरतरुपुष्पाणां सदृशसौगन्ध्यं तैलम् । तुरुष्कं तथा वालुका तथा हरेणुका तथा गन्धवती तथा त्वचा कच्चूरमांसी एतानि समांशानि यस्मिन् द्विगुणानि भागद्वयपरिमाणानि यत्र । तमालं गन्धपत्रं तथा रीपनेयं तथा कुवलयं कुष्ठमेतानि एवंविधं सकर्पूरेण समानां द्रव्याणां च दलादीनामेकतमस्य चतुर्भागमात्रेणादत्तं चिद्धं संस्कारमिति(?) ॥ ४५ ॥

णअकुसिणतडिअकुवळदळतावसकेसरेहि सरिसेहि ।
अहिमअरकिरणताविअं तेळ्ळं लडहंगणादइअं ॥ ४६ ॥

न(व ? ख)कुङ्कुमतुटिकुवलयतापसकेसरैः सदृशैः ।
अहिमकरकिरणतापितं तैलं लटहाङ्गनादयितम् ॥

इदं तैलं सुभगवर्धितवल्लभत्वम् । कैर्द्रव्यैः । नखेन कुङ्कुमेन तथागरुकुष्ठसिल्लकैः, तथा तापसेन दमनकेन, तथा केसरेणाङ्ककेरोरेण एतैः समांशैः अहिमकरस्य तीक्ष्णांशोरंशुभिस्तीव्रैर्यथोक्तेन विधिना कथितमिति ॥ ४६ ॥

एलादलजल(धिमार ? विसाण)तअलअराअरुणसंखअ
रसमालाचन्दणेहि सञ्जुत्ता सरिसंसआ ।
सेलेअ(तिर ? विउ)णभाअमीसिआ अआ कअचुण्णआ
घम्मे तिळ्ळं कुणन्ति बहुसुअन्धामोअअं ॥ ४७ ॥

एलादलजलविषाणत्वक्तगरारुणशङ्खका
रसमालाच(न्नलैः ? न्दनैः)संयुक्ताः सदृशांशकाः ।
शैलेयद्विगुणभागमिश्रिताः कृतचूर्णा
घर्मे तैलं कुर्वन्ति बहुसुगन्धामोदकम् ॥

इदं तैलं घर्मे तीक्ष्णातपे यथोक्तेन विधिना साधयन्ति । कीदृशम् । सान्द्रसुरभिगन्धम् । कानि द्रव्याणि तत् तैलं भवति । तुटिवालकगन्धपत्रकुष्ठसार-

कुटिलकुङ्कुमनखाः चोलरपृक्कासिल्हकैः सहितास्तुल्यभागाः । शैलेयकस्य शिलापुष्पस्य द्विगुणाभ्यां भागाभ्यां सहिताः। एवं कृताः सन्तश्चूर्णिता इति॥

दारुरसङ्काडिलकेसरमाळारुणवाणरेहिं पडएहिं ।
पिक्कंमिसिरिअगन्धं तेळ्ळं सरए णिसेवेहं ॥ ४८ ॥

दारुरसकुटिलकेसरमालारुणवानरैर्वर्धितैः ।
पक्वं प्रसृतगन्धं तैलं शरदि नि(वेश ? षेव)ध्वम् ॥

एतत् तैलमेतैर्द्रव्यैः पक्वं सत् शरत्काले अभ्यञ्जादिना भजध्वम् । कैर्द्रव्यैः । देवदारुचोलतगरनागकेसरस्पृक्काकुङ्कुमसिल्हकैः। कीदृशैः । उत्तरोत्तरभागवृद्धया वर्धितैरिति ॥ ४८ ॥

कमपरिवड्ढिअणहवक्कळकडुहळदळसेळसाहिअं तेळ्ळं।
सिसि(रम्मि)सेविह सुअन्धपरिमळं तुहिणपडिपक्खं
[ ॥ ४९ ॥

क्रमपरिवर्धितनखवल्कलकटुफलदलशैलसाधितं तैलम् ।
शिशिरे सेवध्वं सुगन्धपरिमलं तुहिनप्रतिपक्षम् ॥

इदं तैलं शिशिरकाले भजध्वम् । कीदृशम् । सुरम्यामोदमत्युष्णवीर्यत्वात् तुषारप्रतियोगि। कैर्द्रव्यैः साधितम्। शङ्खत्वचाभ्यां, तथा कटुफलेन सिल्हकशैलाभ्यां चैतैरुत्तरोत्तरैकभागवर्धितैः पञ्चभिरिति ॥ ४९ ॥

णहसलिळकुन्तिआरुणकरिएळाचळणरन्दमळएहिं ।
कमवड्ढिएहि विहिणा साळसमिसिसाहिअं तेळ्ळं ॥ ५० ॥

हरिअन्दणवणसारपङ्कहिमसिसिरमइसअसुअन्धं ।
गिह्मे विअंमिअसिअसळिलविणिवारणसमत्थं ॥ ५१ ॥

नखसलिलकुन्तिकारुणकर्येलाचरनरेन्द्रमलयैः ।
क्रमवर्धितैर्विधिना सालसशिखिसाधितं तैलम् ॥

हरिचन्दनघनसारपङ्कहिमशिशिरमतिशयसुगन्धि ।
ग्रीष्मे विजृम्भितस्वेदसलिलनिवारणसमर्थम् ॥

इदं तैलमेतैः सालसे मन्दाग्नौ यथोक्तपाकविधानेन पक्वं सदेवंगुणविशिष्टं भवतीति सम्बन्धः। कैर्द्रव्यैः। शङ्खवालकपाण्डुवर्णकुङ्कुमनागकेसर-

त्रुटिसिल्हकतगरासिल्हकैः । कीदृशैः । क्रमवर्धितैः उत्तरोत्तरभागसाधितैः । किंविशिष्टम् । अत्यन्तसुरभि, तथातिशीतवीर्यत्वाचन्दनप्रसाधनसान्द्रकर्पूरकर्दम तुषारवच्च शीतलग्रहणनिदाघकाले विसृतघर्माम्बुसेचनरक्तमिति (?) युगलकम् ॥ ५१ ॥

लहुमलआगरुतक्करससेलविणिम्मिअसरिसवाअअं
(मिअंककिरणवलिसिसिरमणंगदइअण ।?)
पञ्चगुणकुडिलमलुब्भयमह विउणणहं ।
(तुडितिउणं) समीसमलमाणलसाहिअं सुसुअन्धं ।
तिल्लमिण मिअंककिरणावलिसिसिरमणंगदइअं ॥ ५२ ॥

लघुमालातुरुष्कसशैलविनिर्मितभागकं
पञ्चगुणांशकुटिलमलयोद्भवमथ द्विगुणनखम् ।
त्रुटित्रिगुणं समिश्रमलसानलसाश्रितं सुसुगन्धि
(तैलं ?) तैलमिदं मृगाङ्ककिरणावलिशिशिरमनङ्गदयितम् ॥

इदं तैलं चन्द्रमरीचिमालावच्छीतलमतिशयसुभगामोदं चात एव पुष्पामोदामप्रियं (?) । कीदृशम् । अगरुस्पृक्कासिल्हकामोलशैलेयैर्जनितास्तुल्या अंशा यस्य तथा । पञ्चगुणं च प्रत्येकं पञ्चविभागैः स्थितैः । अगरुचन्दने तथा । द्विगुणांशैर्द्वाभ्यां भागाभ्यां नखः शङ्खो यत्र तथा । एलायाः त्रिगुणैरंशैस्त्रिभिर्भागैः संयुक्तमेवंविधद्रव्यभागं सम्पृद्धम्निपक्वमिनि ॥ ५२ ॥

णहसलिलकुडिलकुवलअदलघुसिणतुरुक्कवोललोहेहि ।
कमवड्ढिएहि तेल्लं सिसिरे कअमालईवासं ॥ ५३ ॥

नखसलिलकुटिलकुवलयदलकुङ्कुमतुरुष्कवोललोहैः ।
क्रमवर्धितैस्तैलं शिशिरे कृतमालतीवासम् ॥

इदं तैलं शिशिरकाले सेव्यम् । कीदृशम् । सम्पादितः सुमनसः (?) पुष्पाधिवासितं तत्तुल्यगन्धमित्यर्थः । कैर्द्रव्यैः सिद्धम् । नखवाळनरेन्द्रविषाणगन्धपत्रकाश्मीरकसिल्हरसागरुभिर्नवभिः । कीदृशैः । उत्तरोत्तरैकांशातिरिक्तैरिति ॥ ५३ ॥

वड्ढिल(करिकुडिल)कुवलअदलणहरविदेविवोलभाएहि ।
कुणह दणु(ण)इन्ददइअं णीलुप्पलसाहिअं तेल्लं ॥ ५४ ॥

वर्धितकरिकुटिलकुवलयदलनखरविदेविबोलभागैः ।
कुरुत दनुनरेन्द्रदयितं नीलोत्पलवासितं तैलम् ॥

इदं तैलं साधयत । कीदृशम् । इन्दीवरैरेव दत्ताधिवासं तत्सान्द्रामोदत्वात् तथा दनुनरेन्द्रस्य नयस्य प्रियं तेन सशास्त्रप्रयुक्तत्वात् । कैर्द्रव्यैः । नागकेसरतगरकुष्ठगन्धपुष्पशङ्खानां तथा रसैः कुङ्कुमस्य तथा स्पृक्कारसयोरित्येवमष्टाभिः क्रमवर्धितैर्भागैरिति ॥ ५४ ॥

कमवड्ढिअकररुहतुडितमालदलसेलकुवलअगेहेहि ।
मेल्लं पाडलपसूणवासिअं कुणह गह्मेहि ॥ ५५ ॥

क्रमवर्धितकररुहतुटितमालदलशैलकुवलयगजैः ।
तैलं पाटलप्रसूनवासितं कुरुत ग्रीष्मैः ॥

इदं तैलं निदाघोपयोग्यं साधयत । कीदृशम् । पाटलकुसुमसमानसौरभत्वात् तैरधिवासितम् । कैर्द्रव्यैः । नखेला(तमाल)गन्धपत्रशैलेयकुष्ठनागकेसरैः । कीदृशैः । उत्तरोत्तरभागाधिकैरिति ॥ ५५ ॥

घणदण्डसारमुणालदेविगुरुसेलकुवलदलेहि ।
तुडिफलिणिवणम्मीसिएहि जूहिआवासिअं तेल्लं ॥ ५६ ॥

घनदण्डसारमृणालदेविगुरुशैलेयकुष्ठ(ज ? द)लैः ।
तुटिफलिनीवनोन्मिश्रैर्यूथिकाधिवासितं तैलम् ॥

यूथिकापुष्पविशेषेण तुल्यामो(दैर्भ ? दं भ)वतीति (वि?)शेषः । कैर्द्रव्यैः । मुस्तक्रोधनिकत्वचोशीरस्पृक्काहिभिस्तथा अगरुणा तथा शैलेयकुष्ठगन्धपत्रैः । कीदृशैः । एलाप्रियङ्गुभ्यां तथा वनेन परिलेपेन युक्तैरित्येतैः समांशैरिति ॥

घणफलिणिमुणालदेविजलकुवलअणहसेलआ
तुडिलण्डासारलेहमीसिआ समभाअआ ।
फअवासा जूहिआइ णिक्खित्ता कअचुण्णआइ
सिलनेल्लं कुव्वन्ति मद्दुअहिअआणन्दं ॥ ५७ ॥

... ... ... ... ... .... .... ...
... ... ... ... ... ... ... ....।
... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ...॥

एतानि द्रव्याणीत्यनेन भागक्रमेणेदं तिलतैलं सम्पादयन्ति । कीदृशम् । अतिसुगन्धत्वाद् भद्रा(?) मनोहर्पदयितानि द्रव्याणि मुस्ताप्रियङ्गूशीरस्पृक्कावालकुष्ठकररुहशिलापुष्पाणि । कीदृंपि । एलाक्रोधनिकात्वचागुरुसहिता-येतानि तुल्यांशानि कीदृंपि । यूथिकायाः पुष्पविशेषेण सम्पादिताधिवासितानि । एतैः सर्वाणि सूक्ष्मपिष्टानि सन्ति तैलं ..........न्तस्तैन्यानतैस्ततः (?) सूर्यपाकविधिना तैलं सम्पादयतीति । शैलेयं नपुंसकं, प्राकृते तु पुंस्त्वे एवं प्रयुक्तम् ॥ ५७ ॥

**गुरुमहु(पुर ?)कालागुरुसालुब्भवसक्कराहिं सरिसाहिं ।**
**भणिओ भाअणधूओ जवणेहिं सुअन्धतेळ्ळाण ॥ ५८ ॥**

गुरुमधुकालागरुशालोद्भवशर्कराभिः (सदृशाभिः) ।
भणि(ते ? तो) भाजनधूपो यवनैः सुगन्धितैलानाम् ॥

(सुगन्धितैलाना)मुक्तानां यवनैर्गन्धयुक्तिविदग्धैरविशेषैरयं तैलस्थापनभाण्डस्याधिवासिको धूप उक्तः । कैर्द्रव्यैः । गुलेन इक्षुविकारेण तथा माक्षिकेण तथा गुग्गुलुलोहाभ्यां तथा सालोद्भवेन तथा सर्जरसेन तथा सितशर्करयेत्येतैः समांशैरिति ॥ ५८ ॥

**फालेअअकणअच्छल्लीकेसररअणीराहअ**
**दळणअसंवलिअवलिअमाळकुन्तिसणाहिअ ।**
**भुज्जिअजावचुण्णमीसमइव(ण्ण)द्धसुअन्धअं**
**उद्दणं करेइ घडदासिणं वि अंगअअं ॥ ५९ ॥**

फालेयककनकच्छल्लीकेसररजनीशोधितं
मदनकसंवलितमलयमालाकुन्तिकसनाथम् ।
भूर्जित (श ? या)वचूर्णमिश्रमतिवर्णाढ्यसुगन्धि
उद्वर्तनकं करोति घटदासीनामप्यङ्गकम् ॥

उद्वर्तनं कुम्भदासीनां कर्मकरीणां क्लेशकर्कशशरीराणामपि गात्रमतिगौरं स्वामोदं च सम्पादयतीति । कीदृशम् । पीतसारसुवर्णवल्लीनागकेसरपिण्डहरिद्राभिः शोभमानं, तथा मदनकेन तापसेन संवलिताभिश्चन्दनस्पृक्काहरेणुभिः संयुक्तमित्येतैः समांशैः सर्वैर्द्रव्यैः तुल्यितपरिमाणेन भूर्जितानामक्षतानां

पिष्टेन सर्वाभिरित्यर्थः(?)। सहितमिति पूर्वोक्तगात्राभ्यङ्गेनैतज्जललोलितमुपयो-क्त्यमित्यर्थः ॥ ५९ ॥

कुरुसेळकणअकामिणिकाळेअदळसमंणहद्धसमं ।
कुङ्कुमदमणमपाअं ळाआसञ्जोइअं मसिणं ॥ ६० ॥
माळइतेळोल्ल कामिणीण(?)सह कुणइ कणअगोराइ ।
उव्वट्टणमइसुन्दरपरिमळसुहआइ (अंगाइ) ॥ ६१ ॥

गुरुशैलेयककामिनीकालेयकदलसमं नखार्धसमम् ।
कुङ्कुमदनकपादं लाजासंयोजितं मसृणम् ॥
मालतीतैलार्द्रकामिनी नरं सम्पादक(?)करोति कनकगौराणि ।
उद्वर्तनकमतिसुन्दरपरिमलसुभगान्यङ्गानि ॥

इदमुद्वर्तनकं सुरभिगन्धं सुभगानि तथा हेमप्रभाणि विलासिनीनां गात्राणि सदा करोति। कीदृशम्। अगरुशैलेयकपद्मकश्यामापीतसारगन्धपत्राणि समानि तुल्यांशानि यत्र तथार्धांशेनार्धपरिमाणेन करुरुहो यत्र अरुणतापसौ पादपरिमाणौ चतुर्भागांशौ यत्र तत् तथाविधम्। सर्वं चूर्णितं सत् तुल्यांशेन लाजाचूर्णेन लाजासक्तुभिः संयोजितमेवंविधं सत् सुमनस्तै(?)रार्द्रीकृतमिति युगलकम् ॥ ६०,६१ ॥

उद्वर्तनविधिः —

दमणअकाळाअमसूराणदळिअणिच्छाळिळआण।
एक्कमेक्कंम्मि .... .... .... .... ॥ ६२ ॥
एळाविसाणवक्कळकल्लणसणाहेण मसिणपिट्ठेण ।
ण्हाअअमणोहरवण्णमिणं कुणह सुसुअन्धं ॥ ६३ ॥

दमणककालायमसूराणां दलितनिच्छल्लिकानाम् ।
एकेन शुभगन्धसलिलपरितापितानां कृतधूपवासानाम् ॥
एलाविषाणवल्कलकैर्युक्तेन मसृणपिष्टेन ।
अर्धस्नानकं मनोहरवर्णमिदं कुरुत सुसुगन्धम् ॥

इदं स्नानं स्नानार्थं गात्रविरूक्षणमतिसुरभिसस्यप्रभवं सम्पादयत। केन द्रव्येण। चणकालायमसूराणां सस्यविशेषाणां सम्बन्धिनामन्यतमेन सूक्ष्मैकेन। कीदृशानाम्। प्रथमं द्विदलीकृतानां, ततो निस्तुषीकृतानां, ततः सुरभिणा

जलेन दत्तभावनानां ततः सम्पादितधूमकुसुमाधिवासानां तत एषां मध्यात् कस्यचित् मसृणपिष्टेन तुटिकुष्ठसारमांसीभिः सह समांशाभिर्वसाभिस्तुल्य-मात्राभिः संयोजितेनेति । युगलकम् ॥ ६२,६३ ॥

**बहुसो गन्धोअएण भाविअओ सुविसुक्खओ**
**बहुधूअपसुअवासवड्ढिअमसुराअओ ।**
**फच्चूरमुरापिअंगुमेसिजओ कअचुण्णओ**
**मळअसंगआणसुहतण्डुलाणिअकंबओ ॥ ६४ ॥**

बहुशो गन्धोदकेन भावितसुविशुष्कं
बहुधूपप्रसूतवासिवर्धितमधुरामोदम् ।
फच्चूरमुराप्रियङ्गुपेषीकृतं धूपं
मलनकमभ्यक्तानां शुभतण्डुलनिकुरुम्बम् ॥

इदं मलनकं खदिरपिष्टाख्य उद्वर्तनाविशेषः, यदभ्यक्तगात्राणां प्रयु-ज्यते । किं तदुन्मलनम् । शुभानां मुसितानां व्रीहितण्डुलानां धून्दमुक्तेन क्रमेण चूर्णत्वमापादितम् । कीदृशम् । बहुवारं सुगन्धिना जलेन दत्तभावनं सत् तथैव बहुशः पारधानं ततः बहुर्यवृधूपेन(?) ततः पुष्पाधिवासेन विशेषितं सुन्दरसौरभं, ततः सूक्ष्मपिष्टं सत् फलमसुगन्धमुराफलिनीमांसीभिः सूक्ष्मपिष्टाभिस्तत्समान-परिमाणाभिः सर्वाभिर्मिश्रीकृतं सत् पुनः पि(ष्टावि? ष्टमि)ति ॥ ६४ ॥

**चळचोरअकुट्ठमुराविसल्लिपूराण तिउणमामळअं ।**
**पेउरगुळपिण्पिमेकं माळइकुसुमेहि कअवासं ॥ ६५ ॥**
**एळातअविरइअयेभपवाढुआमोअं मेळिआणिउणं ।**
**मअओअआहिवदइअं गन्धामळअं आणिण सेवेह ॥ ६६ ॥**

चलचोरकुष्ठमुरासल्लीप्रतीभ्यस्त्रिगुणामलकम् ।
प्रचुरं गुडशुक्ति पक्कमामलकं .... ॥
.... .... .... .... ।
.... .... .... .... ॥

ग्रन्थिपर्णिकवाप्यसुगन्धमुराप्रातिकोशेभ्यस्त्रिगुणं धात्रीफलं तथा बाहु-ल्याभ्यां गुडनखाभ्यां मृद्वग्निपात्रधूपिताभ्यां पक्कमुपरिन्यस्तद्वितीयपात्रघनळ-

प्यदानेन परिशोषितं तत्र गृहीत्वा सुमनःपुष्पैः स्थापनभाण्डविवासनेन विहिताधिवासं तत् तथा साराभ्यां दल(श्च ?च)तुर्भागमात्राभ्यां प्रयुक्तेन संस्कारेण विशेषितं यत् सौरभं तेनातिसुगन्धित्वात् सदाकृष्टभ्रमरवृन्दं येन तथाविधमिति। युगलकम् ॥ ६५,६६ ॥

**आमळअतअरतुडिदळघणकुवळअनिउणमंबिलसुपिट्ठं ।**
**मणिमाहधूविअमइसुरभिपरिमळआसवेवेहि ॥ ६७ ॥**

आमलकतगरतुडि(दल)घनकुवलयोद्विगुणमम्लसुपिष्टम् ।
मणिनखधूपितमतिसुरभिपरिमलं दामवेधैः ॥

द्वितीयं सुगन्धामलकं निषेवध्वमित्यनुवर्तते । कीदृशम् । त्रुटिर्वैलागन्धपत्रमुस्ताकुष्ठेभ्यः द्विगुणमामलकं काञ्जिकेन सुवर्तितं पश्चान्मणिसर्जरसेन नखेन च शुक्त्या च पूर्ववद् धूपितं तथा पुष्पाधिवासवेधाभ्यां पूर्वोक्ताभ्याम् अतिशयसुगन्धामोदमिति ॥ ६७ ॥

**एलादळमदणअतुडिसेळअकच्चूरमरुवअसमाणं ।**
**होइ अइसुरहिपरिमळमामळअं कामिणीदइअं ॥ ६८ ॥**

एलादलमदनकतुटिशैलेयकच्चूरमरुवकसमानम् ।
भवत्यतिसुरभिपरिमलकमामलकं कामिनीदयितम् ॥

अर्थोज्जरपिष्टं स(त्य ? द)तिसुगन्धसौरभमिति । कीदृशम् । वर्धितैकैकांशविशेषितानि कच्चूरतुटित्वगगन्धपत्राणि यत्र तत् यथा, प्रथमं द्रव्यतुल्यमात्रेण कुस्तुम्बुरीफलेन युतं एषां सम्बन्धिना सामर्थ्येण गुरुकेन द्विगुणमिति ॥

**कच्चूरवसाविसाणघणचंवअसमभाअअं**
**निसिसेळसुराविसळिळसिअसरिसवसञ्जुत्तअं ।**
**जुञ्जि सव्वोसिहोइजइअसमंगलकारिअं**
**सेवह ळच्छीभूअमण्णइचवळवणासिअं ॥ ६९ ॥**

कच्चूरवसाविषाणघनचम्पकसमभागिकं
निशाशैलसुराविसल्लिसितसर्षपसंयुक्तम् ।
युंक्ते सर्वौषधिभ्य।जयशोमङ्गलकारकं
सेवध्वं महालक्ष्मीभूतसकलोपद्रवनाशकम् ॥

सुगन्धामलकान्तरमिमां सर्वौषध्या(ध्यां) स्नानसंविधिशेषस्य युक्तिं प्रयोगं सर्वाङ्गालम्भनेन भजध्वम् । कीदृशम् । शोकविनाशकीर्तिकल्यानां सम्पादकं तथा हरिद्राशिलापुष्पगन्धवतीमांसीसितसिद्धार्थकैः समांशैरेव संयुक्तम् । एतानि सर्वाणि समांशानि सूक्ष्मपिष्टानि सर्वौषधिसंज्ञस्नानोपकरणं भवतीति ॥

**सिअसरिसवकुट्ठवआळामञ्जअमंसिळोद्धरअणीहिं ।**
**दारुनिसाचण्णाकामिणी(हिं)गहवियडणं ह्माणं ॥ ७० ॥**

सितसर्षपकुष्ठवचालामज्जकमांसिलोध्ररजनीभिः ।
दारुनिशाचण्डाकामिनीभिः सग्रहविघटनं स्नानम् ॥

एताभिरोषधीभिः सूक्ष्मपिष्टाभिः समांशाभिः स्नानीयानि सर्वाङ्गालम्भनात्मकं सुगन्धामलकादिपरिमलनप्रक्षालनानन्तरं स्नानं सर्वभूतदुष्टनिवारणं भवति । काभिः । सिद्धार्थकवाप्यजलोशीरवीचीशबरहरिद्राभिस्तथा फङ्कटेरीपिशुनाप्रियङ्गुभिरिति ॥ ७० ॥

**कमपरिवड्ढिअतुडिअमीसितअरकुट्ठसामक्खसोहिअङ्गाण ।**
**उम्मूळकसाउचीणपिअङ्गुमळएहिं वसमेहिं ॥ ७१ ॥**

क्रमवर्धिततुटिमिसितगरकुष्ठश्यामासरङ्गानाम् ।
उन्मलनकषायोरणप्रियङ्गुमलयैर्वा सर्गः ॥

अथ स्नानादौषधिग्रहणानन्तरं गात्राणामुन्मलनार्थं द्रव्यसमवाय(?) कैर्द्रव्यैः कृतम् । उत्तरोत्तरं कांशाधिगिपितैरेलागतपुष्पानरेन्द्रविषाणकाशिलोध्रैरथवा उशीरश्यामाकचन्दनैः समांशैरिति ॥ ७१ ॥

**तअतअरकुट्ठतच्चूरतमाणचणदोरएहिं सणहेहिं ।**
**गन्धमळिअन्दसहिअं मणोहरं अट्ठमंगळअं ॥ ७२ ॥**

त्वक्तगरकुष्ठगन्धतमालचनचोरकैः सनखैः ।
गन्धमलियून्दसहितं मनोहरमष्ट(मङ्गल)कम् ॥

इदं गन्धप्रधानत्वात् गन्धाख्यमष्टभिर्द्रव्यैः सहितमष्टमङ्गलकम् । अष्टानां मङ्गलानां समाहारः । कैर्द्रव्यैः । त्वचा तगरेण कुष्ठेन तथा कच्चूरेण तमालेन चन्दनेन नखेन च समांशैरिति ॥ ७२ ॥

चळचोरअजळयक्कळणरेन्दणहकुट्टकळ्ळसमभाअं ।
हळससिसअकअवेहं गेन्धं विचउक्कमंगळअं ॥ ७३ ॥

चलचोरकजलवल्कलनरेन्द्रनखकुष्ठकललसमभागम् ।
फलशशिमदकृतवेधं गन्धं द्विचतुष्कमङ्गलकम् ॥

इदमपरं गन्धाख्यमष्टमङ्गलकम् । कीदृशम् । सिल्हकग्रन्थिपर्णकतमालत्वक्कगरशुक्तिकवाप्यमांसीनां समभागा यस्मिन्, तथा जातीफलकर्पूरिकाभिर्वेधयुक्त्या दत्तसंस्कारमिति ॥ ७३ ॥

तुडिमदणअमिसितअदळपिअंगुघणवारिसेळभाएहिं ।
कमवड्ढिएहिं माळइसुअन्धसुमणअं कुणह ॥ ७४ ॥

तुटिमदनकशशिरवन्दलप्रियङ्गुघनवारिशैलभागैः ।
क्रमवर्धितैर्मालतीसुगन्ध स्वक्फलं कुरुत ॥

एवमष्टमङ्गलकपर्यन्तक्रमितं स्नानविधिं प्रतिपाद्य उक्तानामेव प्रयोगाणां यथासम्भवं भेदान्तराण्याह । तत्रोन्मलनकमिदं सुमनःपुष्पवर्ग सुरभि सम्पादयत । कैर्द्रव्यैः । एलातापससितपुष्पासारगन्धफलिनीवालकशिलापुष्पाणामंशैः । कीदृशैः । उत्तरोत्तरैकांशवर्धितैरिति ॥ ७४ ॥

कुणह कमवड्ढिअसअसिघणजळहरकुसुमेहिं माळइसुअन्धं ।
उव्वट्टणअमसरिसं मज्जणसमए णरेन्दाण ॥ ७५ ॥

कुरुत क्रमवर्धिमिशिघनजलधरकुसुमैर्मालतीसुगन्धि ।
उद्वर्तनकमसदृशं मज्जनसमये नरेन्द्राणाम् ॥

इदमपरमुन्मलनकं पूर्ववत् सुमनःपुष्पैः सुरभि राज्ञां स्नानकाले योग्यं सम्पादयत । कीदृशम् । अविद्यमानसमानम् । कैर्द्रव्यैः । उत्तरोत्तरवर्धितैरंशैः शतपुष्पमुस्तावालकशैलेयकरूवङ्गैरिति ॥ ७५ ॥

जळकळ्ळासारविसाणसंखदण्डामुरारिदेवीहिं ।
ह्णाणे विणिज्जिआसेसगन्धपसरं सआ कुणह ॥ ७६ ॥

जलफललासारविषाणशङ्खदण्डामुरारिदेवीभिः ।
स्नानं विनिर्जिताशेषगन्धप्रसारं सदा कुरुत ॥

स्नानमिदं नित्यमनुतिष्ठत । कीदृशम् । परिभूतसमस्तद्रव्यान्तरविकाससौरभविकासम् । कैर्द्रव्यैः । वालकमांसीत्वक्कुष्ठनखकोधनिकाभिः, तथा सुरारिणा गन्धमुरया तथा स्पृक्कयेत्येतैः समांशैरिति ॥ ७६ ॥

**णहणलिआतहकुवलअफलिणिमुरामांसि(सालि)सालेहिं ।**
**सकईहिं कुणह ह्लाणं सुरसुन्दरिमउलिदुल्ललिअं ॥ ७७ ॥**

नखनलिकाश्वकुवलयफलिनीमुरामांसिशालिशै(लं ? लैः) ।
सकपिभिः कुरुत स्नानं सुरसुन्दरीमौलिदुर्ललितम् ॥

स्नानमिदं सम्पादयत । कीदृशम् । अतिकृष्टत्वादमरनारीणां शिरस्सु विजृम्भण हे वारि(?) । कैर्द्रव्यैः । शुक्तिविद्रुमलतासारकुष्ठप्रियङ्गुगन्धवतीपेशीशालिजातकशिकापुष्पैः सिल्हकसहितैरिति ॥ ७७ ॥

**गिरिगुत्थासारविसाणवारिफइफळलदळवणेळाहिं ।**
**गन्धिमुराघणतअरेहिं कुणह जणवल्ल(हं) ह्लाणं ॥७८॥**

गिरिगुच्छासारविषाणवारिकपिफलदलवनैलाभिः ।
ग्रन्थिमुराघनतगरैः कुरुत जनवल्लभं स्नानम् ॥

इदं सकललोकप्रियं सम्पादयत । कैर्द्रव्यैः । शैलेयेन गुच्छाख्येन ह्रेयकेन तथा त्वचा कुष्ठवालकसिल्हकमांसीगन्धपत्रपरिपेलवतुटिभिस्तथा ग्रन्थिना ग्रन्थिपर्णकेन तथा मुरारिमुस्तरूपैरिति ॥ ७८ ॥

**घणपेळवकचोर(अ)भाएहिं समेहिं विरइअं ह्लाणं ।**
**मिसिचळणजुअळमिलिअं समत्थदुग्गन्धविद्दवणं ॥ ७९ ॥**

घनवारिपेलवचोरकभागैः समैर्विरचितं स्नान(मिद ?)म् ।
मिसिचरणयुगलमिलितं समस्तदुर्गन्धविद्रावणम् ॥

इदमन्यत् स्नानं सर्वदुर्गन्धापसारणं भवति । कैर्द्रव्यैर्निर्मितम् । मुस्ताव निग्रन्थिपर्णकानां तुल्यांशैस्तथा शतपुष्पया घनादीनामेकतमचतुर्भागद्वयेनार्धे योजितमिति ॥ ७९ ॥

**रसरेणुत्तन्भिमणिघणवणकइफळळासारकेसरमुराभिः ।**
**गिरिगुच्छिकुडिळसळिळेहिं चिहिउणदळमिसिभं ह्लाणं**
**[॥ ८० ॥**

रसरेणुनलिनीघनवनकपिकलिलासारकेसरमुराभिः ।
गिरिगुच्छसलिलकुटिलैः सलिलद्विगुणमिश्रितं स्नानम् ॥

इदमन्यत् स्नानं बोळकुन्तीनलिकामुस्तपरिपेलवसिल्हककच्चूरत्वङ्नाग-केसरदानैस्तथा शिलापुष्पयौनेयकम्पालकैरीदृशैः भागद्वयपरिमाणेन गन्धपत्रेण यु(क्तेन ? क्तम् । )युक्तपूर्वद्रव्येभ्यो द्विगुणं गन्धपत्रमत्र देयमिति ॥ ८० ॥

समतुलिअकररुहेलादळवक्कळघणविसाणभाएहि ।
ह्लाणं लहु(क)अचंपअपसूअगन्धं सआ कुणइ ॥ ८१ ॥

समतुलितकररुहैलादलवल्कलघनविषाणभागैः ।
स्नानं लघूकृतचम्पकप्रसूनगन्धं सदा कुरुते ॥

स्नानमिदं नित्यमाचरत । कीदृशं कैर्द्रव्यैः । तुल्यैर्नखसौदामिनीत-मालपत्रैः शृङ्गाभ्रकुष्ठानामंशैरिति ॥ ८१ ॥

कइकळिलासारमुरापिअंगुगिरिसाळिणहविसाणेहि ।
विद्दुमळआसणाहं विज्जाहरवल्लहं ह्लाणं ॥ ८२ ॥

कपिकलिलासारमुराप्रियङ्गुगिरिशालिनखविषाणैः ।
विद्रुमलतासनाथं विद्याधरवल्लभं स्नानम् ॥

इदं स्नानं सिद्ध्यनुकूलत्वात् विद्याधराणां प्रियम् । कीदृशं नलिकया सहितम् । अन्यैः कैर्द्रव्यैः । चलमांसीतुङ्गवतीश्यामापुष्पशालिजातकशङ्खवालै-रिति ॥ ८२ ॥

णरगअविसाणकररुहसोआमिणिवक्कळेहि रइअस्स ।
ओहामिअमाळइपरिमळस्स ह्लाणस्स कोहल्लो ॥ ८३ ॥

नरगजविषाणकररुहसौदामिनीवल्कलैर्विरचितस्य ।
परिभूतमालतीपरिमलस्य स्नानस्य कौशलम् ॥

एतैर्द्रव्यैः सम्पादितस्य कौम्य( ? )स्नानविशेषस्पर्धायां समर्थः । कीदृशस्य । निर्जितसुमनोमकरन्दामोदस्य । कैर्द्रव्यैः । उशीरनागकेसरकुष्ठैः शुक्तिवुटित्वचैरिति ॥ ८३ ॥

चलसोळसिप्पिवक्कळाविणिम्मिअं होइ मणहरं ह्लाणं ।
लहुइअमददप्पोद्दामपरिमळं मेळिआळिउळं ॥ ८४ ॥

चलशालिशुक्तिवल्कलविनिर्मितं भवति मनोहरं स्नानम् ।
लघूकृतमृगदर्पोद्दामपरिमलं मेलि(त ?)तालिकुलम् ॥

इदं स्नानमेवं भवति । कीदृशम् । अवरीकृतकस्तूरिकाप्रगल्भामोदम् । अत एवाकृष्टमधुकरनिकुरुम्बम् । अत एव हृदयहारि । कैर्द्रव्यैः । कपिशुक्तिनखत्वचैरिति ॥ ८४ ॥

दणुइन्दविसल्लीकुट्ठत्तभसमभाअसणाहं
तगरफरुहसुद्धसालिभाअणणिअसोहअं दइअं ।
सुरसुन्दरीण कुङ्कुमपाउम्मीसिअं ह्णाणं
व(ह ?)णहत्थिदाणपरिमलसरिसामोअअं ॥ ८५ ॥

दानवेन्द्रविसल्लीकुष्ठत्वचसमभागसनाथकं
तगरकरुहशुद्धशालिभागापनीतशोभं दयितम् ।
सुरसुन्दरीणां कुङ्कुमपादोन्मिश्रितं स्नानं
व(ह ?)नहस्तिदानपरिमलसदृशामोदम् ॥

इदं स्नानं काननहस्तिमदजलपरिमलसदृशामोदम् । अत एव सुरसुन्दरीहृदयप्रियम् । कीदृशम् । सुगन्धमुरामांसीविषाणसाराणां तुल्यैरंशैर्जनितम् । तथा ग्रन्थिपर्णस्य तथा नखस्य तथा शुद्धस्य चर्मरोमादिरहितस्य शालिजातकस्येति त्रया(दीनां ? णां) मुराद्यपेक्षया प्रत्येकमर्धभागेनापादितसौन्दर्यम् । तथारुणस्य पूर्वापेक्षयैव चतुर्भागेन संयुक्तमिति ॥ ८५ ॥

स्नानोपकरणसहितस्नानविधिः ।

---

घणवणदळजळमाळाकुवळअकच्चूरकुन्तिसमभाअं ।
तिहळामुदमुत्ताफळविद्धं विएन्ति पडवासं ॥ ८६ ॥
(घनवनदलजलमालाकुवलयकच्चूरकुन्तिसमभागम् ।
त्रिफलामदमुक्ताफलविद्धं विरचयन्ति पटवासम् ॥)

एवं पटवासं विरचयन्ति । कैर्द्रव्यैः । घनवनदलमालाकुवलयकच्चूरकुन्तिसमभागं तथा त्रिफलया-पूर्वोक्तवेगार्धत्रिफलया तथा कस्तूरिकया तथा मुक्ताफलेन कर्पूरेण तैर्वेभयुक्तया कृतसंस्कारमिति ॥ ८६ ॥

समजळमुणाळमाळाघणरसमाळेन्दमळएहिं ।
मिसिफररुहद्धम्मीसेचन्दमअवेहिओ वासो ॥ ८७ ॥

समदजलमृणालमालाघनरवश्यामनरेन्द्रमलयैः ।
मिसिकररुहार्धमिश्रैश्चन्द्रमदवेधितो वासः ॥

अयमपरः पटवासः । कैर्द्रव्यैः । तुल्यांशैर्वासकोशीरस्पृक्कामुस्तमियङ्गु-तगरचन्दनैस्तथा पुष्पनखयोः प्रत्येकं भागार्धेन युक्तैः । कीद(शैः? शः) । कर्पूर-कस्तूरिकाभ्यां पूर्ववत् कृतवेध इति ॥ ८७ ॥

विरइज्जइ कमधूअं लक्खइ्वेसि कररुहगुळेहिं ।
जइउच्छइ तरुणीअणमम्महसुरगोअरेणेउं ॥ ८८ ॥

.... .... ... .... ...
.... ... .... .... ....

विरचयत क्रमधूपं समनन्तरं गाथाव्याख्यास्यमानं विधिं सम्पादयत । कैर्द्रव्यैः द्रुमव्याधिशुक्तिमांसीशङ्खगुलैरिति ॥ ८८ ॥

कह केरउवयधूवो कररुहजळकुन्दाळिळजाडिळाहिं ।
जो कुणइ कुळवहूण वि सळविआरं विअम्भन्तं ॥ ८९ ॥

... ... ... ... ... .. ... ... ... ... ... ... ।
(यः करोति कुलवधूनामपि स्मरविकारं विसर्पन्तम् ॥)

धूपानां विविधा युक्तिः समुदितानां युगपत् पृथक् धूपितानां च धूप-द्रव्याणां क्रमेणेति क्रमधूपस्यास्य वैदग्ध्येन शक्तिविशेषणं प्रतिपादयति । एतैर्द्रव्यैः कथं क्रमधूपः क्रियतां न युज्यते कर्तुमित्यर्थः । यः प्रसरं साध्वीनामपि स्मरविकारोद्रेकजनकत्वाच्चारित्रस्य चलतां जनयति । कैर्द्रव्यैः नखलाक्षा-कुन्दुरुवालकमांसीभिः । अथवा कस्मिन् द्रव्ये धूपितप्रयान्तये द्वितीयं धूपनी-यमिति क्रमोऽवसेय इति ॥ ८९ ॥

णहपुरजळळक्खागुळेहिं कमधूविआण वत्थाण ।
भोआण वि बला सुअन्धपरिमळं णेन्ति गन्धवहा ॥ ९० ॥

नखपुरजललाक्षागुलैः क्रमधू(पितानां वस्त्राणाम् ।
भोतानामपि बलात् सुगन्धपरिमलं नयन्ति गन्धवाहाः ॥)

नखपुरजललाक्षागुलैः क्रमधूपविधिना क्रमेणोक्तया परिपाट्या धूपि

तानां दत्ताधिवासानां वस्त्राणां प्रक्षालितानामपि सान्द्रसौरभं पवना नयन्ति स्थिरामोदोऽयं धूप इत्यर्थः ॥ ९० ॥

**कमवड्ढिअलक्खाकुन्तिसाळणहमहुसिआउरुकप्पूरेहि ।**
**कम्बळअचिहुररल्लअधूविओ सममंसिसहिएहि ॥ ९१ ॥**

क्रमवर्धितलाक्षाकुन्दसालनखमधुसितागुरुकर्पूरैः ।
कम्बलकचिहुररल्लकधूपः (सम)मांसीसहितैः ॥

अयं कम्बलकानामूर्णामृगरोमादिरचितानां प्रावरणानां तथा चिहुराणां केशानां चामरादिवालानां च तथा रल्लकानां वैचित्र्यस्य वस्त्रद्वयं घनीकृतानां कन्थाख्यां परिधानानामधिवासार्थः पिण्डधूपः । कैर्द्रव्यैः । उत्तरोत्तरैकांशविशेषितैस्तरुष्यादिकुन्दुरुसर्जरसशुक्तिमाक्षिकसितशर्करालघुसिल्हकैः । कीदृशैः । सैंधवस्तुल्यमात्रया जटिलया संयुक्तैरिति ॥ ९१ ॥

**(समणहा ? मिअणाहि)मिअंकारुणसिप्पिजडावारिवारण [गुरुभिः ।**
**मळअसिहाहि (धूओ ?)कमवड्ढिआहि धूओ महासारो ॥९२॥**

मृगनाभिमृगाङ्कारुणशुक्तिजटावारिवारणगुरुभिः ।
मलयसिताभ्यां क्रमवर्धितैर्धूपो महासारः ॥

परमोत्कर्षोऽयं धूपः । कैर्द्रव्यैः । कस्तूरिकाकर्पूरकुङ्कुमनखवालकनागकेसरसागुरुमिः तथा चन्दनसितशर्कराभ्यामेतैरुत्तरोत्तरैकभागाधिकैरिति ॥

**णहकइकुवळअचन्दणपिअंगुजळफळळसेळगुरुसरिसो ।**
**मज्जारपाअसहिओ समगुळसञ्जोइओ धूओ ॥ ९३ ॥**

नखकपिकुवलयचन्दनप्रियङ्गुजलफलशैलगुरुसदृशः ।
मार्जारपादसहितः समगुळसंयोजितो धूपः ॥

अयं धूप एवंविधः सन्धेयः । कीदृशः । शुक्तिसिल्हककुष्ठमलयस्यामावालकमांसीशिलापुष्पलोद्राणि तुल्यमात्राणि नवैतानि यत्र तथा प्राप्तिनातकस्य एषां द्रव्याणामेकतमस्य चतुर्भागमात्रेण संयुक्तस्तथा सर्वेषां दत्तानां तुल्यपरिमाणेन गुलेन भावित इति ॥ ९३ ॥

**सेळसिळाचन्दणतुहिनपुल्लइन्दउपळभदळेहि ।**
**पुरसाळिसाळिळमप(ळ)ञ्जणेहि समसक्करो धूओ ॥ ९४**

शैलशिलाचन्दनतुटितण्डुलकुन्दकुवलय(नखैः? दलैः) ।
पुरशालिसलिलमृगलाञ्छनैः समशर्करो धूपः ॥

एषोऽपि धूप एवंविधः सन्धेयः । कैर्धूपः । शिलापुष्पकपथ्यासिल-कमलयैः लाक्षाकुन्दुरुकुष्ठशुक्तिभिर्नवभिः तथा गुग्गुलुशालिजातकवालकर्पूरैः समांशैः एतेषां सर्वेषां च तुल्यपरिमाणा सितशर्करा यत्र स तथाविध इति ॥ ९४ ॥

मलअसिलारसकुवलयकररुहसज्जरसवि(र)इओ सगुलो ।
धूओ थिरयरहलअसुन्तपरिमलो कामिणीदइओ ॥ ९५ ॥

मलयशिलासारकुवलयकररुहसर्जरसविरचितः सगुलः ।
धूपः स्थिरतरकः सुगन्धिपरिमलः कामिनीदयितः ॥

एवंविधो धूपः स्थायी सान्द्रसुरभ्यामोदः, अत एव विलासिनीवल्लभः । कीदृशः । चन्दनहरीतकीबोलकुष्ठ(नख)सालैः समांशैः षड्भिर्निर्मितस्तेषां तुल्यमात्रेण गुळेन सहित इति ॥ ९५ ॥

णहकुट्ठचन्दणवरुसालिसिवासक्कराहि णिम्मविओ ।
कामिणिहिअआणन्दो धूओ मलआणलो णाम(:?) ॥ ९६ ॥

नखकुष्ठचन्दनागुरुशालिशिवाशर्कराभिर्निर्मितः ।
कामिनीहृदयानन्दो (धूपो) मलयानिलो नाम(:?) ॥

अयं धूपश्चन्दनामोदसम्पादान्मलयानिलसंज्ञो नाम । अत एव सुर-सुन्दरीमनःप्रमोदमदः । कीदृशः । शुक्तिकाकुवलयलघुशालिजातहरीतकीसित-शर्कराभिः सहित इति ॥ ९६ ॥

घणससितअररअणो चलगीवो कंगुणिम्मिअसरीरो ।
कररुहविरयपक्खो मंसीमुहो देविकअचलणो ॥ ९७ ॥

एसो विअड्ढकामिणिमाणससरसङ्गवड्ढिअच्छायो ।
महुमहुरसद्दसुहओ धूओ कलहंसओ णाम ॥ ९८ ॥

घनशशितगरनयनचलग्रीवः कङ्कुनिर्मितशरीरः ।
कररुहविरचितपक्षो मांसीमुखो देवीकृतचरणः ॥

एष विदग्धकामिनीमानससरसङ्गवर्धितच्छायः ।
मधुमधुरशब्दशब्दो धूपः कलहंसको नाम ॥

अयं धूपः कलहंसाभिधानो भवति। लटहविलासिनीनां हृदयजलाशय-सम्पर्कविशेषितशोभः। कलहंसो हि मानसाख्यसरसःसम्बन्धे वर्धितशोभो भवति। कीदृशो धूप इति कलहंसतया(रूपरूपना ? नु)रूपाणि विशे(षेणेत्या ? प-णान्या)ह—मुस्तमेव मस्तको(न्घ ? य)स्य तथा सिल्हका कण्ठो यस्य तथा श्यामया कल्पित आकारो यस्य तथा नखेन निर्मितान्यङ्गानि यस्य तथा कलमान(सं ? नं) यस्य तथा स्पृक्काविरचितौ पादौ यस्य तथाविधः तथा माक्षिकमेव मुरसो ध्वनिस्तेन सुन्दरद्रव्याणां काव्यवैचित्र्यार्थं सावयवरूपता मात्रा तु सर्वेषां समांश इव। तथा घनतगरचलुकङ्कुकररुहमांसीदेवीभिः समांशाभिर्मधुभाविताभिर्धूपोऽयं सन्धेय इति तात्पर्यम् ॥ ९७,९८ ॥

मळअविसाणलिळहि चउग्गुणाहि कइकरुहेहि
[ सारेहि।
कुणइ सुरतरुणिदइअं महुगुळसञ्जोइअं धूवं ॥ ९९ ॥

मलयविषाण + + + भिः चतुर्गुणैः कपिकररुहैः सारैः।
कुरुत सुरतरुणीदयितं मधुगुलसंयोजितं धूपम् ॥

धूपं कुरुत, कैर्द्रव्यैः चन्दनेन मांस्या चतुर्भागैः प्रयुक्ताभ्यां, तथा सिल्ह-केन नखेन चैकैकभागतया समानाभ्याम्। कीदृशं माक्षिकगुडाभ्यां भावित-मिति ॥ ९९ ॥

सज्जरसम(ळ)अकुवळअजळकररुहपेसिभोलिळ
[ सिल्लेहि।
सरभाअन्धुम्मीसेहि सअळजणवल्लहो धूओ ॥ १००॥

सर्जरसमलयकुवलयजलकररुहपेशीतैलपलाशैः।
सरभागार्धोन्मिश्रैः सकलजनवल्लभो धूपः ॥

अयं धूपः समस्तलोकप्रियः। कैर्द्रव्यैः सर्जचन्दनवालककुष्ठनखमांसी सिल्हकशिलापुष्पैः समांशैर्बोलस्य सर्जरसादिभागानामेकतमादानेन युक्तै रिति ॥ १०० ॥

चळमळअसलिळगुरुणह(विसलिळमहु)सक्कराहि
[ सरिसीहि।
सिसिरम्मि कुणइ धूवं णवकुङ्कुम(स्य ? )परिमळसुअन्धं
[ ॥ १०१ ॥

चलमलयसलिलागुरुनखविसल्लीमधुशर्कराभिः(की ? स)दृशीभिः ।
शिशिरे कुरुत धूपं नवकुङ्कुमपरिमलसुगन्धम् ॥

इमं धूपं शिशिरकाले साधयत कीदृशं प्रत्यग्रकाश्मीरसौरभं शोभनामोदं कुङ्कुमस्य शिशिरकालयोग्यत्वात् तत्संवादिसौगन्धम् । तत्र काले धूपमिमं कुरुतेत्युक्तं भवति । कैर्द्र ः। सिल्हकचन्दनवालकलघुशुक्तिमांसीक्षौद्रसितशर्कराभिस्तुल्यमात्राभिरिति । १०१ ॥

कइकररुहकाळागुरुविसल्लीजळमळअसक्करासहिअं ।
णवघुसिणसुराहिगन्धं करेह महुमोइअं धूवं ॥ १०२ ॥

कपिकररुहकालागुरुविसल्लिजलमलयशर्करासहितम् ॥
नवकुङ्कुमसुरभिगन्धं कुरुत मधुमोदितं धूपम् ॥

इमं धूपं साधयत । कीदृशं चक्रनखलघुककलवालकचन्दनसितशर्कराभिः समांशाभिर्युक्तं तथा माक्षिकेण मेलनयुक्त्या जनितामोदम् । अत एव प्रत्यग्रकाश्मीरवत् स्वामोदमिति ॥ १०२ ॥

गिरिकुवळअणहकुन्दुरुसज्जरसतुरुक्खमंसिसञ्जुत्तो ।
धूओ मम्महदइओ तुलिउब्भडघुसिणमाहप्पो॥ १०३ ॥

गिरिकुवलयनखकुन्दुरुष्कसर्जरसमांसीसंयुक्तः ।
धूपो मन्मथदयितस्तुलितोद्भटकुङ्कुममाहात्म्यम् ॥

अयं धूपः स्पर्धितोद्दामकाश्मीरसौरभातिशयः, अत एव कन्दर्पप्रियः । कीदृशः शिलापुष्पकुवलयकरजकुन्दुरुर्श रैः*

कुसुमसम्मिलितो ।
धूपः कृतगुलवेमः कालागुरुगन्धसंवादी ॥

अयं धूपः श्रेष्ठलोहसौरभसदृशामोदः । कैर्द्रव्यैः सिल्हकेन वालकदेवदारुभिस्तथा शिंशपया मण्डलपत्रिकया निस्त्वच्या(?)दारुभिरेतैः समांशैः । कीदृशः । मधुना मिश्रीकृतस्तथा अगरुणा पूर्वद्रव्याणामेकतमचतुर्भागमात्रेण दत्तसंस्कार इति ॥ १०४ ॥

---

* अत्र किञ्चिद् गलितमिव भाति ।

थोरेणअअजळचन्दणमिसिसेसवतेळ्ळमंसिसञ्जुत्तो।
धूवो कुसुमरसोल्लीकीरउ काळाअरुसुअन्धो ॥ १०५॥

थौनेयफदलचन्दनमिसिशिशपातैलमांसिसंयुक्तः ।
धूपः कुसुम(सारा ? रसा)र्द्रः क्रियतां कालागरुसुगन्धिः ॥

अयं धूपः कृष्णागरुवत् सुन्दरामोदः साध्यताम् । कीदृशः चारीगन्धपत्रमलयशतपुष्पामण्डनापत्रिकासिल्हककल्कैः समांशैर्युक्तस्तथा माक्षिकेणार्द्रीकृत इति ॥ १०५ ॥

सज्जरसमेहकररुहकमअकुवळअपेसिविरइअं ।
सिसिरे धूवं सेवेह सआ काळाअरुपरिमळब्भाहिअं ॥ १०६॥

सर्जरसमेघकररुहकामिकुवलयपेशिविरचितम् ।
शिशिरे धूपं सेवध्वं सदा कालागरुपरिमलाभ्यधिकम् ॥

धूपमिमं शिशिरकाले भजध्वं कृष्णागरुसौगन्ध्यादतिरिक्तं यतः । मणिमुस्तनखसिल्हककुष्ठजटामिर्निर्मित(म्) इति ॥ १०६ ॥

कमवड्ढिअरोहिणिगुरुपवङ्गहिङ्गुळ(अ)गुळसक्करासहिओ ।
उव्वहइ बहळगन्धं सिद्धत्थअजोइओ धूवो ॥ १०७ ॥

क्रमवर्धितरोहिणीगुरुप्लवङ्गहिङ्गुलकशर्करासहितः ।
उद्वहति बहलगन्धं सिद्धार्थकयोजितो धूपः ॥

अयं धूपः केसरकुसुमसौरभं वारयति । कीदृशः । उत्तरोत्तरैकांशाभिः कटुरोहिसिक्थककर्मारसितशर्कराभिः । तथा रोहिणीतुल्यांशेन मधूच्छिष्टेन युक्त इति ॥ १०७ ॥

कुन्दसिवाजउचन्दणरोहिणि(च ? क)म्मारघुसिणकुट्ठेहि ।
धूवो मइरामहिओ परिवासिअकेसरं जेइ ॥ १०८॥

कुन्दशिवाजतुचन्दनरोहिणि(चर्मार्का ? कर्मा)रकुङ्कुमकुष्ठैः ।
धूपो मदिरामलित परिवासितकेसरो जयति ॥

अयं धूपो बकुलपुष्पामोदमभिभवति । कैर्द्रव्यैः । सिल्हकनिर्यासपथ्याजाक्षामलयकटुकाहिङ्गुकारुणकुष्ठैः । कीदृशः । सुरयार्द्रीकृतः । तथाविधो रात्रिमेकां पर्युषित इति ॥ १०८ ॥

समतुल्लिअमलअसिल्लअक(न्दु ? डु)रिंहुकुमक्कराहिं
[ विउणेहिं ।
धूओ विसट्टकेसरपम्अल्लीलं समुव्वहइ ॥ १०९ ॥
समतुलितमलयसिह्लकमदुहिङ्गुकुशर्कराभिर्द्विगुणाभिः ।
धूपो विकासितकेसरमसूनलीलां समुद्वहति ॥
अयं धूपः बकुलपुष्पामोदाविकासो भवति । कैर्द्रव्यैः । तुल्याभ्यां सिह्लकचन्दनाभ्यां सहिताभिः पट्टफलसरदायिताभिर्द्विगुणाभिर्द्वाभ्यां भागाभ्यां दत्ताभिरिति ॥ १०९ ॥

धूपविधिः ।

घणकइमिअङ्कमालासामारुणसलिलपूइमलएहिं ।
रइआ वत्ती अइसुरहिपरिमला होइ सरसेहिं ॥ ११० ॥
घन(कपि)मृगाङ्कमालाश्यामारुणसलिलपूतिमलयैः ।
रचिता वर्तिरतिसुरभिपरिमला भवति सरसैः ॥
इयं धूपवर्तिरेभिर्द्रव्यैर्नि(र्मि)तात्यन्तसुगन्धिसारा सम्पद्यते । कैर्द्रव्यैः । मुस्तप्लवङ्गकर्पूरस्पृक्काप्रियङ्गुकुङ्कुमवालकशालिजातकचन्दनैः समांशैर्वर्तिनामनुक्तवर्तिनां द्रव्यविशेषाणां नानाजलेन वर्तनम् । सर्वासां तु द्रवितेन सिक्थकेनोपरि तलेपो देय इति ॥ ११० ॥
समतुल्लिअ(ला ? सा)ल्लिजल(णेहिं ? णह)पिअङ्गुतेल्लेहिं
[कुन्दुरुसुअन्धा ।
होइ जणहिअअदइआ वाल्अजलअट्टिआ वत्ती ॥ १११ ॥
सममलयशालिजलनखप्रियङ्गुतैलैः कुन्दुरु(सावा ? सुगन्धा) ।
भवति जनहृदयदयितावालजलवासिता वर्तिः ॥
इयं वर्तिः ह्रीबेरकथितेन तोयेन रचितामोदमनोहारिणी भवति । कैर्द्रव्यैः । तुल्यांशश्चन्दनपूरितकेन वालककरञ्जश्यामासिल्हकैः । कीदृशी । अर्धभागेन सल्लकीनिर्यासचोलैः प्रत्येकं यस्यां सा तथेति ॥ १११ ॥
मअतुहिणागरुचरणम्मलअमंसिविउणविड्ढअं कमसो ।
होइ सिआअलपिट्ठा विसुद्धञ्जणवल्लहा वत्ती ॥ ११२ ॥
मदतुहिनागरुचलमलयमांसीद्विगुणसंवर्धिता क्रमशः ।
भवति सिताजलपिष्टा विशुद्धाञ्जनवल्लभा वर्तिः ॥

इयं वर्तिश्चौक्षलोकप्रिया भवति । कीदृशी सितशर्करोदकेन वर्तिता किरूपा कस्तूरिकाकर्पूरलोहसिल्लकचन्दनपेशीनामुत्तरोत्तरैर्द्विगुणांशैः कृतवृद्धिः यावच्चतुष्षष्टिरंशो मांस्यां सम्पद्यत इति ॥ ११२ ॥

करुहागुरुदळवोळककुन्दुरुगिरिहिमपिअंगुभाएहि ।
कमवड्ढिएहि रइआ रइ(वळह)वळहा वत्ती ॥ ११३ ॥

कररुहागुरुचलवालककुन्दुरुगिरिहिमप्रियङ्गुभागैः ।
क्रमवर्धितै रचिता रति(वल्लभ)वल्लभा वर्त्तिः ॥

(इ)यं वर्त्तिः कन्दर्पप्रिया नाम । कीदृशी नखागुरुसिल्लकह्रीवेरसल्लकीनिर्यासशैलेयचन्दनश्यामानामुत्तरोत्तरैकांशवृद्धिभिरंशैर्निर्मितेति ॥ ११३ ॥

ससिमाळासिल्लाअरुसामाजळजळअसाळिमळएहि ।
विरइअ धूव(व)त्तिं मअरद्धअवीरिअणामा(णम्) ॥ ११४ ॥

शशिदेवीतैलागुरुश्यामाजलजलदशालिमलयैः ।
विरचयत धूपवर्त्तिं (मकरध्वजवीर्यनामानम्) ॥

पुष्पायुधशबरविशेषाख्यो(?)सन्धकः कैर्द्रव्यैः । कर्पूरदेवीसिल्लकलघुप्रियङ्गुह्रीवेरमुस्तामार्जारचन्दनैः समांशैरिति ॥ ११४ ॥

घुसिणदेवजळजळहरसमसामाहिं सणाहिआ
साळिनेळकन्दुट्टअवसीस(रिस)भाइआइ ।
विउणमाळसिरिवासमळआउरुगुगुअन्धिआ
धूअवण वासेइ दिसावळआइ वत्तिआ ॥ ११५ ॥

कुङ्कुमदेवी(जल)जलधर(सम)श्यामाभिः सनाथा
शालितैलोत्पलपेशीसदृशभागाः ।
द्विगुणशालिश्रीवासमलयागुरुगुग्गुलगन्धका
धूपेन वासय(न्ती ? ति) दिग्वलया(ति ? नि) वर्तिका ॥

इयं धूपवर्तिका आशामण्डलानि सौगन्ध्येनाधिवासयति । कीदृशी । अरुणमालावालकमुस्तजलधरैस्तत्समया श्यामया, सनाथा मदाङ्कुश इत्यर्थः । तथा शालिजातकसिल्लककुङ्कुमानां समभागा यस्यां, तथा द्विगुणैः प्रत्येकं भागद्वयपरिमाणैः सर्जरसपाडामावचन्दनाद्यैः, अद्याप्यवासितेति ॥ ११५ ॥

सुरदारुमुरापेळ्ळवळक्खाउरुसेळळचुण्णकअगब्भा ।
वासेइ दिसावळअं पईवविणिवेसिआ वत्ती ॥ ११६ ॥

सुरदारुमुरापेलवलाक्षागुरुसारचूर्णकृतगर्भा ।
वासयति दिग्वलयं प्रदीपविनि(वर्तिका? वेशिता) वर्तिः ॥

एषा प्रदीपे न्यस्ता वर्तिराशामण्डलं सुरभयति । कीदृशी । देवदारुगन्धमुरापरिपेलवजतुलोहसर्जरसानां चूर्णेन पूरिताभ्यन्तरा सुगन्धवर्ती । दीपेषु तिलतैलं देयमिति ॥ ११६ ॥

सेलेअजळकुवळअमळआगुरु(के?)रइ(आ?अ)वत्तिकअ-[गब्भो ।
सुरहिअवासहरन्तेळिळसुन्दरो कीरउ पईवो ॥ ११७ ॥

शैलेयकजलकुवलयमलयागुरुरचितवर्तिकृतगर्भः ।
सुरभितवासगृहान्तरसुन्दरः क्रियतां दीपः ॥

अयं दीपः सम्पाद्यताम् । कीदृशः । अधिवासितभवनोदरतया सुभगः । किमात्मकः । शिलापुष्पकवालकविष(ण)चन्दनलोहैर्निर्मिता यासौ वर्तिस्तया कृतगर्भः पूरितस्नेहपात्र इति ॥ ११७ ॥

जळकुवळअ(चळ)चम्मारुआरगुरुसाळितण्डुळकणेहिं ।
वासेइ वासभवणं पईववत्ती कआ विहिणा ॥ ११८ ॥

जलकुवलयचलचम्मारदारिशालितण्डुलात्रिगुणैः ।
वासयति वासभवनं प्रदीपवर्तिः कृता विधिना ॥

इयं प्रदीपनवर्तिः यथोक्तविधानेन सम्पादिता मन्दिराभ्यन्तरं सुगन्धयति । कैर्द्रव्यैः । ह्रीवेरविषाणवानरदलदेवदारुमार्जारलाक्षातगरैः समांशैरिति ॥

वोळाउरुकुन्दुरुतेळ्ळ (चु?पु)रकप्पूरसणाहिआ
सिरिवासिआमळअसज्जर(ससम)भाउज्जळवण्णिआ ।
दइआ कुसुमाउहस्स तरुणीअणमणमोहिआ
कीरउ सव्वचअरेण भवणपईववत्तिआ ॥ ११९ ॥

वोलागुरुकुन्दुरु(तैलपुर)कर्पूरसनाथिका
श्रीवासमलयसर्जरससमभागोज्ज्वलवर्णिका ।
दयिता कुसुमायुधस्य तरुणीजनमनोहरा
क्रियतां सर्वादरेण भवनप्रदीपवर्त्ता ॥

इमं गन्धं सुरभिद्रव्यमयं रामालम्भनाद्युपयोगिषु गन्धसंज्ञं प्रयोगविशेषं साधयत। कीदृशम्। सान्द्रसौरभमत एव नित्यं साधयत। मनस्विनां प्रियेषु मन्युकृतगन्धनिर्मथनम्। कैर्द्रव्यैः। मनःशिलापुष्पश्यामानागकेसरसुगन्धमुरामांसीभिः, तथा चलितैस्तुटिपादसहितैर्मेलत्वमर्धभागमापादितैः सर्जरसकुष्ठसिल्हकैः। कीदृशैः। सूक्ष्मैलानां पादेन चतुर्भागेन संयुक्तः तथा बोलत्वचयोरर्धभागार्धमष्टभागो येषु तथैकीकृत्य सूक्ष्मचूर्णैरिति। युगलकम्॥ १२३, १२४॥

**वसुवेअविउणवसुमुणिमिअंकभाअद्धसंघमिलिएहिं।**
**मलउब्भवकणअपिअंगुसालिणवघुसिणवोलेहिं॥ १२५॥**
**सिग्गुजडारसपि(ण्डो?ट्ठो)मअससिहलकोलवेहिओ गन्धो।**
**अइउज्जलेण सुअन्धो कइमालइमलिआवासो व्व॥ १२६॥**

(वा?व)सु(देव?वेद)द्विगुणवसुमुनिमृगाङ्कभागार्धशङ्खमिलितैः।
मलयोद्भवकनकप्रियङ्गुशालिनवकुङ्कुमबोलैः॥
शिग्रुजटारसपिष्टो (स?म)दशशिफलकोरवेधितो गन्धः।
(अत्युज्ज्वलेन सुगन्धः) कृतमालतीमल्लिकावासः॥

अयं गन्ध एवंविध उत्कृष्टवर्णाभ्यस्तथा सुन्दरामोदः यतः सुमनोमल्लिकापुष्पैर्दत्ताधिवासभाण्डस्थापनाद् विहितसंस्कारः। कैर्द्रव्यैः। चन्दनपद्मकश्यामाशालिजातकमत्स्यमनसकुङ्कुमरसैः कियद्भागपरिमाणैः। यथाक्रमं चन्दनादिभिः वसु(भि)रष्टाभिर्भागैर्वे(धै?दै)श्चतुर्भिस्तथा द्विगुणैर्वसुभिः षोडशभिः, (तथा मुनिभिः) सप्तभिस्तथा मृगाङ्कैनैकेन तथा भागेनेत्येवं भागसङ्ख्यैः सद्भिरेकीभूतैः। कीदृशो गन्धः। सौभञ्जनमूलनिष्यन्देन वर्तितस्तथा कस्तूरिकाकर्पूरजातीफलतक्कोलकैश्चतुर्भागमात्रैः प्रत्येकं वेधीकृतकृतसंस्कार इति युगलकम्॥ १२५, १२६॥

**कमवड्ढिअससिसेअमलअगुरुघुसिणकेसरं कुणह।**
**थिरबहलसुरभिगन्धं विलेवणं पव्वईदइअं॥ १२७॥**

क्रमवर्धितशशिशैलमलयगुरुकुङ्कुमकेसरं कुरुत।
स्थिरबहलसुरभिगन्धं विलेपनं पार्वतीदयितम्॥

इदं समालम्भनं पार्वतीदयितं नाम साधयत। कीदृशम् उत्तरोत्तरेंऽशवृद्धानि कस्तूरिकाकर्पूरशिलापुष्पचन्दनलोहारुणनागकेसराणि यस्मिंस्तथा अत एव दृढसान्द्रसुरभिगाढामोदमिति॥ १२७॥

**ळवलीफळकङ्कुमुणाळपारिभाएहि चन्दणसरिसं ।**
**माळइवासं गिह्मे विळेवणं चन्दवेहेण ॥ १२८ ॥**

लवलीकङ्कुमृणालपारिभागैः चन्दनसदृशम् ॥
मालतीवासं ग्रीष्मे विलेपनं चन्द्रवेधेन ॥

इदं विलेपनं निदाघकालोपयोगि सन्धीयत इत्यर्थः । कैर्द्रव्यैः । लवलीफलं लताकस्तूरिका तथा वलिनीनरवालकैः । समांशैः । एषां च सर्वेषां तुल्येन चन्दनेन । कीदृशम् । सुमनःपुष्पैर्दत्ताधिवासं तथा कर्पूरेण कृतवेधमिति॥१२८॥

**कुन्दुरु(र)सकुसुमफळणहगोळअकळलेहि वड्ढिअपाएहि ।**
**समचन्दणेहि सरए विळेवणं चन्दम(अ)विद्धं ॥ १२९ ॥**

कुन्दर(स)कुसुमफलनखगोलककललैर्वर्धितभागैः ।
समचन्दनैः शरदि विलेपनं चन्द्र(मद)विद्धम् ॥

इदं विलेपनं शरत्कालोपयोगि । कैर्द्रव्यैः । कुन्दुरुबोललवङ्गजातीफलशुक्तिकतक्कोलमांसीभिः उत्तरोत्तरैकाङ्गवृद्धाभिः । समं सर्वेषां तुल्यं चन्दनं येषां तैस्तथा कर्पूरकस्तूरिकाभ्यां दत्तवेधनमिति ॥ १२९ ॥

**मिसिरसकुवळअमाळागअकुडिळमुणाळसळिळजळएहि ।**
**कमवड्ढिएहि मअचन्दविद्धमिसिधूमिओ गन्धो ॥ १३० ॥**

मिसिरसकुवलयमालागजकुटिलमृणाल(सलिलजलैः) ।
(क्रमवर्धितैर्मदचन्द्रविद्धमिसि धूपितो गन्धः ।)
* .... .... ....न्धानां कुरुत मृगदर्पप्रतिरूपम् (?) ॥

इदमुक्तानां वेधनीयानां सर्वगन्धानां साधारणं वेधं कुरुत । कीदृशं वेधमात्रयेति ॥ १३० ॥

**एळामुणाळचन्दणज(ळह)रतअकणअमांसिसाहिएहि ।**
**अच्चन्तसुरहिगन्धं कढिअं गन्धोअअं होइ ॥**

एलामृणालचन्दनजलधरत्वचकनकमांसीसाहितैः ।
अत्यन्तसुरभिगन्धं क्वथितं गन्धोदकं भवति ॥

इदं सुरभिजलं क्वाथविधिना साधितं सत् सम्पद्यते । कीदृगम् । अतिशयस्वामोदम् । कैर्द्रव्यैः । त्रुटिरणमलयमुस्तवल्कलपद्मकलकैः समांशैरिति ॥१३१॥

---

* इह कियांश्चिद् ग्रन्थभागो लुप्तः ।

जळजळअमुणाळमुरामांसीकङ्मळअकाढिअं विहिणा।
तिहळादळवणअरविद्धं गन्धोअअं भणिअं ॥ १३२ ॥

जलजलदमृणालमुरामांसीकपिमलयक्राथितं विधिना।
त्रिफलादलवनचरविद्धं गन्धोदकं भणितम् ॥

इदमपरं गन्धोदकमुक्तम्। कीदृशम्। क्वथितं यद् गन्धत्रिफलया तुल्या गन्धपत्रेण तथा वनचरेण शालिजातकेनेत्यें(तैस्समां)शैर्वेधमानया कृतवेधमिति ॥ १३२ ॥

मळअजळ(जा? जळ)हरोसीरकङ्कढिएण णिम्मळजळेण।
पिट्ठा विहिणा (पिक्का) गन्धा अइसुन्दरा होन्ति ॥ १३३ ॥

मलय(जल) जलधरोशीरकङ्कुक्वथितेन निर्मलजलेन।
पिष्टा विधिना पक्वा गन्धा अतिसुन्दरा भवन्ति ॥

पूर्वोक्ता गन्धा वक्ष्यमाणाश्च एवंविधाः सन्तोऽत्यन्तसुरभयो भवन्ति। कीदृशाः। पिष्टा वर्तितेन स्वच्छोदकेन। कीदृशेन। क्वाथयुक्त्या साधितेन। कैर्द्रव्यैः। चन्दनवालकमुस्तरणप्रियङ्गुभिः पक्वपिष्टाः सन्तः पक्वाः पूर्वोक्तविधिना क्रमधूपेन धूपिताः। पूर्वोक्तानि गन्धोदकानि सर्वाणि सर्वगन्धानां पेषणविधौ नियो(ज्यन्ते? ज्यानी)ति ॥ १३३ ॥

सिअमरिअकन्दजळपिट्ठसाळिमुरएहिकङ्कु(कुसु? स)मभा-
[अं।
गन्धं मअणाहिसमं गुळ(कारु? कररुह)धूइअं कुणह ॥१३४॥

श्वेतमरिचकन्दपिष्टशालिमुरापेशीकङ्कुमसमभागम्।
गन्धं मृगनाभिसमं गुडकररुह(म?) धूपितं कुरुत ॥

इमं गन्धं सम्पादयत। कीदृशं कस्तूरिकामोदसदृशामोदम्। किमात्मकम्। श्वेतमरिचकन्देन शोभाञ्जनमूलरसेन वर्तितानां शालिजातकमुरारिपिशाचीफलिनीनां तुल्यांशा यस्मिन् स तथा। पश्चाद् गुडनखाभ्यां पूर्वोक्तधूपविधिना धूपितमिति ॥ १३४ ॥

(सर? रस)पञ्च(म)भाअसणाहसाळिसुरसेळवट्टिअं कमसो।
गन्धं गुळणहपिक्कं केअइवासेण मअसरिसं ॥ १३५ ॥

रसपञ्चमभागसनाथशालिसुराशैलवर्तितं क्रमशः।
गन्धं गुडनखपक्वं केतकिवासेन मदसदृशम् ॥

इदं गन्धं कस्तूरिकामोदं कुरुतेत्यनुवर्तते । कीदृशम् । बोलात् पञ्चमेनांशेन संयुक्तं यच्छालिजातकं तस्मात् क्रमवर्धिताभ्यां मुरारिशिलापुष्पाभ्यां संयुक्तं ततो गुडनखाभ्यां पूर्वोक्तविधिना धूपितं ततः केतकीपुष्पाधिवासेनोक्तरूपं भवतीति ॥ १३५ ॥

बोळासालिअदसुइह्रपेसिजळेसळोसआ
चणपिअंगुसेळेहि समं कमवड्डिआ ।
सिप्पिदन्दसिअसिम्भअधूपसणाहिआ
कुसुमवासवेहि हुअन्ति विणिज्जिअदप्पआ ॥१३६॥

बोलशालिकपिदृचपतांशललांशाः
वनप्रियङ्गुशैलैः समं क्रमवर्धिताः ।
शुक्तचन्द्रकसितसिम्भकधूपसनाथाः
कुसुमवासवैर्भवन्ति विनिर्जितदर्पाः ॥

एतेषां द्रव्याणामंशाः एवंविधाः सन्तः अभिभूतकस्तूरिकासौरभा भवन्ति । केषां रसपूतिसिल्हकेशमुरामांसीवालकानां तथा परिपेलवस्य तथा शिलापुष्पाणाम् । कीदृशम् । एतेषां नवानामुत्तरोत्तरैकानुवृद्धया वर्धितास्ततः नखकर्पूरशर्कराकपीनां सम्बन्धिना धूपेन पूर्ववत् प्रयुक्तेन प्रयुक्तास्तथाधिवासेन यथेष्टेन साधारणेनोक्तरूपा भवन्तीति ॥ १३६ ॥

.... .... .... .... ... .... ।
... ... ... .... ... .... ॥

घणकुटिलसद्दलवल्कलैः सदृशैः कुरुत ।
सदा सुलभं गन्धं घनसमयविकासितमाला ॥

कुसुमगन्धं सम्पादयत । कीदृशं वर्षाकाले प्रफुल्लसुमनःपुष्पसमानामोदम् । कैर्द्रव्यैः । मुस्तातगराभ्यां तथा कुलिशेन तथा वालकेन तथा गन्धपत्रत्वग्भ्याम् इति सर्वैः समांशैरिति ॥ १३७ ॥

थिउणपिअंगुम्मीसिअथोणाअअचळजडाहि सारिसाहि ।
कुणह मिसिचळणविद्धं फुळ्ळं वुहसेविअं बहुळं ॥ १३८ ॥

द्विगुणप्रियङ्गून्मिश्रितथौनेयक(चल)जटाभिः सदृशीभिः ।
कुरुत मिसिचरणविद्धं फुल्लं बुधसेवितं बकुलम् ॥

(कुवरा ? वकुल)मिधानं गन्धमिमं साधयत ; कीदृशम् । विकसितं सद् विद्वज्जनैरुपभुक्तम् । कीदृशम् । द्विगुणया भागद्वयपरिमाणया फलिन्या युक्ता(द्वि ? भिः) चारीसिल्हकमांसीभिः सहितं, तथा शतपुष्पया । थौनेयकाया-श्चतुर्भागवृद्धा इति ॥ १३८ ॥

**कमवड्ढिअथोणेअअमळअमिसीचळणवेड्ढिअं कुणइ ।**
**वचळं सत्तदिसामुहपसरिअथिरमंसळामोअं ॥ १३९ ॥**

क्रमवर्धितथौनेयकमलयमांसीचरणमेलितं कुरुत ।
वकुलं सकलदिङ्मुखप्रसृतस्थिरमांसलामोदम् ॥

इदं वकुलाख्यं गन्धं सेवन्ते । कीदृशं किंरूपम् । उत्तरोत्तरैकांशातिरिक्तैः सिल्हकचारीचन्दनैः सह शतपुष्पया बालाश्वभागेन संयुक्तमिति ॥ १३९ ॥

**णिमिचळणमाळाथोणेअएहि कमवड्ढिएहि विरएहि ।**
**णवणिंबसारसहिअं ण(ह)पाउम्मीसिअं वउळं ॥ १४० ॥**

मिसिचलमालाथौनेयकैः क्रमवर्धितैर्विरचयत ।
नवनिम्बस्य रससहितं नखपादोन्मिश्रितं वकुलम् ॥

इदं कुवलयाख्यमपरं गन्धं योजयत । कैर्द्रव्यैः । उत्तरोत्तरैकांशाति-रिक्तशतपुष्पासिल्हकस्पृक्कागुच्छैः तथा नवेन प्रत्यग्रेण (निस्त्वचारिकाश्येन ?) मिसितुल्यांशेन सहितं तथा शुक्त्यैतच्चतुर्थांशपरिमाणया मिश्रितमिति ॥ १४० ॥

**हिमणअणसामारइअकवोळओ**
**चळहत्थओ पच्छादीहरपुच्छओ ।**
**मिसिवअणओ समरपरिट्ठिअचरणओ**
**अइभद्दओ वि(अ)रइ वउळगइन्दओ ॥ १४१ ॥**

हिमनयनश्यामारचितकपोल-
(चल) हस्तपथ्यादीर्घपुच्छः ।
मिसिवदनः समरपरिस्थितचरणः
अतिभद्रः विचरति वकुलगजेन्द्रः ॥

अयमुत्कृष्टत्वाद् गजेन्द्रेण रूपितो वकुलाख्यो गन्धो विजृम्भते । की-दृशः । (वदन ?)लोचनः फलिनीकल्पितगण्डस्थलः सिल्हककरः । हरीतकीदीर्घ-

लाङ्गूलः शतपुष्पामुखः उशीरास्थिपादः अत एवात्यन्तोत्कृष्टम् । गजेन्द्रश्चातिशयवत्या भद्रजात्या युक्तो भवति । द्रव्याणां सर्वेषां समांशानां वैचित्र्यवत्त्वे रूप(क)मिति ॥ १४१ ॥

योळाभउम्मीसिअ(दळ)चळणसणाहकंगुकुडिळेहि ।
भान्तरेहि(?) किरइ गन्धो णोमाळिआसरिसो ॥ १४२॥

बोलाभागोन्मिश्रितदलचरणसनाथकंकुकुटिलाभ्याम् ।
भागतुलितैः क्रियते गन्धो नवमालिकासदृशः ॥

अयं प्रचुरमवासकुसुमामोदो गन्धः साध्यते । कैर्द्रव्यैः । रसस्य भागार्धेन सहिताभ्यां फलिनीतगराभ्यां तुल्यांशाभ्यामिति ॥ १४२ ॥

रसपाउम्मिसिअविसाणवारिळहुमळअकुवळभाएहि ।
कुणह सइ सुरहिचंपअपसूणघणपरिमळं गन्धं ॥ १४३॥

रसपादोन्मिश्रविषाणवारिलघुमलयकुटिलभागैः ।
कुरुत सदा सुरभिचम्पकप्रसून(घन)परिमलं गन्धम् ॥

इमं नित्यं सुगन्धिचम्पककुसुमसान्द्रसौरभं गन्धं साधयत । कैः । बोलस्य उत्तरद्रव्याणामेकतमस्य चतुर्थांशेन मिश्रितानां कुष्टवालकागुरुचन्दनतगराणां समैरंशैरिति ॥ १४३ ॥

— विउणंसतअरमीसिअमळउप्पळगुरुरसेहि सरसेहि ।
गंधं णवचन्दसुरहि कुसुमथिरपरिमळं कुणह ॥ १४४॥

द्विगुणांशतगरोन्मिश्रितमलयोत्पलगुरुरसैः सदृशैः ।
गन्धं नवचम्पकसुरभिकुसुमस्थिरपरिमलं कुरुत ॥

इमं गन्धं प्रत्यग्रचाम्पेयपुष्पगन्धि पुष्पवत् स्थिरस्थायिसौरभं साधयत । कैः । द्विगुणांशेन भागद्वयपरिमाणेन कुटिलेन सहितैः समांशैरिति ॥ १४४ ॥

एक्केक्को कुवळअवक्कळाण(व?)चळचळणमीसिओ भाओ ।
विउणिअपणिअसारो कुब्जअगन्धे सुअन्धम्मि ॥ १४५॥

एकैकः कुवलयवल्कलानां च (दलचो? लचरणो)न्मिश्रितो भागः ।
द्विगुणितवासनकासारकुब्जकगन्धसुगन्धः ॥

अस्मिन् करे(?) पुष्पतुल्यामोदत्वात् कुब्जका(त्वं? त्व)गन्धे सुरभौ अयं द्रव्यक्रमः। कुष्ठत्वचो एकः कर्षः। कीदृशः। सिल्हकस्य कुष्ठापेक्षया चतुर्थेनांशेन सहितः। तथा भागद्वयपरिमाणेन निस्तुषीकृतेन जलशोषितेन स्तुंरी(?)द्वयेन युक्त इति ॥ १४५ ॥

एक्को चळणस्मीसिअवण्णतअकुवळएहिं रमणिज्जो।
अण्णमविउणतुरुक्कतंपघणकेसरा होइ ॥ १४६ ॥

एकश्च चपलरणोन्मिश्रं वर्णत्वकुवलयैः रमणीयः।
अन्यक्रमं द्विगुणतुरुष्कताम्र(व? घ)नकेसरो भवति ॥

एको गन्धः सिल्हकस्य चतुर्थेनांशेन युक्तः परिपेलवसकुष्ठैरन्यः द्वितीयः। उत्तरोत्तरद्विगुणानि सिल्हकत्वङ्मुस्तनागकेसराणि यस्मिंस्तादृश इति ॥ १४६ ॥

एक्को तअकेसरधण्णिएहिं गुळसाळधूइओ सु(र)ही।
अण्णो चळणधणिअयफळेहिं अइमांसळामोओ ॥१४७॥

एकस्त्वकेसरधान्यकाभिः गुडसालधूपितः सुरभिः।
अन्यश्चपलधान्यकावल्कलैरतिमांसलामोदः ॥

एको गन्धस्ताम्रनागकेसरकुस्तुम्बुरीफलैः शोषितैः गुडशालिजातकाभ्यां धूपितोऽत एव सुगन्धिः, चपलसिल्हककुस्तुम्बुरीफलत्वचैः अत एव गन्धसौरभ इति ॥ १४७ ॥

अइ कुज्जअकुसुमसुअन्धसुळहघणपरिमळा।
इस होन्ति गाहाजुवळअरआ मणोहरा गन्धा ॥ १४८ ॥

इति कुब्जककुसुमसुगन्धिसुलभघनपरिमलाः।
इमे भवन्ति गाथायुगलस्य कुगन्धव्हाजिता शुद्धानो (?) मनो-
[ हरा गन्धाः ॥

कुब्जकं फारेटपुष्पम्। शिष्टं गाथाद्वयोक्तचतुष्टयसङ्ग्रहार्थं स्पष्टमिति ॥

तणिआमिसिचश्चळकुवळएहिं कमवड्ढिएहिं विरएइ।
मुहळाळिवळअपिज्जन्तपरिमळकुवळआमोअं ॥ १४९ ॥

धान्यकमिसिचञ्चलकुवलयैः क्रमवर्धितैर्विर(चि? चय)त।
मुखराळिवलय(ची? पी)यमानपरिमलकुवलयामोदम् ॥

इदं गन्धमिन्दीवरसौरभमत एव ध्वनन्मधुकरकुललिह्यमानमकरन्दं साधयत । कैर्द्रव्यैः । शोधितकुस्तुम्बुरीफलैः शतपुष्पासिल्हककुष्ठैरुत्तरोत्तरैकांशवृद्धैरिति ॥ १४९ ॥

सम(च)ळधाळअचन्दणकुवळअभाअद्धमीसरीसिपायं ।
गन्धं कुणह सुअद्धं विसट्टकनोप्पभवपडिरूवं ॥ १५० ॥

समचळयालकचन्दनकुवलयभागार्धोन्मिश्रमपिंपादम् ॥
गन्धं कुरुत सुगन्धं विकसितोत्पलप्रतिरूपम् ॥

इमं गन्धं कुवलकु(सुम ?)वलयामोदं स्पर्धत अत एव (सुरभी स इकः ?) । कीदृशः । तुल्यांशानि गन्धपत्रह्रीबेरमलयानि यस्मिंस्तथा कुष्ठस्यार्धार्धभागेन सहितः शतपुष्पायाश्चतुर्थांशो यस्मिंस्तथा स्थितमिति ॥ १५० ॥

कमवड्डिअधूइ किरइ सअपुप्फादळविसाणफळिणीहि ।
णवकुवळअगन्धसुअन्धसिसिरपरिमळो गन्धो ॥ १५१ ॥

क्रमवर्धिताभिः क्रियतां शतपुष्पादलविषाणफलिनीभिः ।
नवकुवलयगन्धसुगन्धिशिशिरपरिमलो गन्धः ॥

अयं गन्धः मत्प्रमोत्पलपरिमलस्पर्धी शीतलसान्द्रसारः स(म्प ? म्पा)द्यताम् । कैर्द्रव्यैः उत्तरोत्तरकांशातिरिक्ताभिः मिसिकुष्ठसिल्हकश्यामाभिरिति ॥ १५१ ॥

एक्को चळस्स दो कु(व)ळअस्स चत्तारि फळिणिकुसुमाण ।
मिसिये अणीसमेअं करेह कणवीरअं गन्धं ॥ १५२ ॥

एकश्चलस्य द्वौ कुवलयस्य चत्वारि फलिनीकुसुमानाम् ।
मि(श्रित ?)मि स्तोकमिश्रमेतं कुरुत करवीरकं गन्धम् ॥

एतं करवीरपुष्पामोदसम्पादात् करवीराख्यं गन्धं साधयत । कीदृशम् । शतपुष्पाया अनिमिनेनांशेन सहितम् । कथम् । सिल्हकस्य एको भागः, द्वौ कुष्ठस्य, चत्वारः प्रियङ्गुपुष्पाणामिति ॥ १५२ ॥

दो भाआ कुवळअस्स चि(उण)पिअंगुम्मीसिआ
मिस्सिआद्धद्धमीसदळभाअसणाहआ ।
एअं पिसिऊण जळाविरइ चुण्णअं ता
पसरिअपरिमळम्मि ळहुळहु कणवीरअं ॥ १५३ ॥

द्वौ भागौ कुवलयस्य द्विगुणप्रियङ्गुमिश्रितौ
मिसिपादार्धा(र्धे ? र्ध)मिश्रदलभागसनाथौ ।
एतत् पिष्ट्वा यदतिरिच्यते चूर्णकं तत्
मम्लतपरिमलमपि लघूक्रियते करवीरकम् ॥

एतद् वक्ष्यमाणचारीस्थितिद्रव्यवृन्दं पिष्ट्वा यदि चूर्णं सम्पाद्यते तत् तेन स्वामोदेन विकसितामोदमपि हयारिपुष्पमपरीक्रियते । कीदृशं द्रव्यवृन्दम् । द्वौ भागौ कुष्ठस्य, ततो द्विगुणभागचतुष्टया परिमाणयाप्यामया सहितौ, शतपुष्पायाः पादस्य अर्धार्धेन षोडशभागेन सहितस्य सिल्हकस्य एकेनांशेन युक्ताविति ॥ १५३ ॥

चळ(द ? च)ळणभाअमहिअं दळचन्दणसिग्गुमूळभाएहि ।
कुणह जणहिअअदइअं केअइसमपरिमळं गन्धं ॥ १५४ ॥

(चलचरणभागसहितं दलचन्दनशिग्रुमूलभागैः ।
कुरुत जनहृदयदयितं केतकीसमपरिमलं गन्धम् ॥)

इमं लोकमनोनन्दकं केतकीपुष्पसदृशामोदं गन्धं सम्पादयत । कीदृशम् । सिल्हकस्य चतुर्भागेन संयुक्तं गन्धपत्रमलयसौभञ्जनमूलानां समैरंशैरिति ॥

कमाविउणसाळिसिमिरअचन्दणमुणाळभाएहि ।
होइ जिआसेसपसूअपरिमळो केअईगन्धो ॥ १५५ ॥

क्रमद्विगुणशालिसितमरिचकन्दचन्दनमृणालभागैः ।
भवति (जनि ? जि)ताशेषप्रसूनपरिमलः केतकीगन्धः ॥

अयं केतकीपुष्पपरिमलसम्पादात् केतकीगन्धसं(ज्ञं ? ज्ञ)गन्धः परिभूतसमस्तकुसुमामोदः सम्पद्यते । कैः । उत्तरोत्तरद्विगुणया वृद्ध्या शालिजातकशिग्रुमलयोशीराणां भागैरिति ॥ १५५ ॥

सळिळेळाघणचन्दणफळळसवाच(श्न ? ळद)ळेहि सरिसेहि ।
केअइकुसुमसुअन्धो सिग्गुजडामीसिओ गन्धो ॥ १५६ ॥

सलिलैलाघनचन्दनफललवचाचलदलैः सदृशैः ।
केतकीकुसुमसुगन्धः शिग्रुजटामिश्रितो गन्धः ॥

अयं गन्धः केतकीपुष्पसुरभिः । बालकत्रुटिमुस्तकमलयमांसीहरीतकीमिशिशैलेयदलैः तुल्यांशेन सौभञ्जनमूलेन युक्त इति ॥ १५६ ॥

एलामुणालकुवलअजलजलहरसिलिलभाअसञ्जुत्तो ।
सिग्गुजडारसपिट्ठ गन्धमिणं केअइसरिच्छं ॥ १५७ ॥

एलामृणालकुवलयजलजलधरसिलकभागसंयुक्तम् ।
शिग्रुजटारसपिष्टो गन्धोऽयं केतकीसदृशः ॥

इमं केतकीतुल्यं गन्धं सम्पादयत । कीदृशं त्रुटिरणवियाणवालमुस्तादलानां समभागैः सहितं सौभञ्जनमूलरसेन वर्तितमिति ॥ १५७ ॥

कमवड्ढिएहि जाई कमपरिहीणेहि मल्लिआ होइ ।
(प?स)रिसेहि पौरपसवा तअरागुरुदळवरंगेहि ॥ १५८ ॥

क्रमवर्धितैर्जातिः क्रमपरिहीनैर्मल्लिका भवति ।
(इति?) सदृशैः प्रचुरप्रसवा तगरागुरुदलवराङ्गैः ॥

त्रुटिलघुगन्धपत्रत्वग्भिरुत्तरोत्तरैकांशवृद्धैर्जातिसुमनःपुष्पामोदो गन्धः सम्पद्यते । एतैरुत्तरोत्तरैरेकांशहीनैर्मल्लिकापुष्पसमानो गन्धः सम्पद्यते । एतैश्चैव समांशैः प्रचुरप्रसवानां मल्लिकाख्यं पुष्पं तत्समानो गन्धः सम्पद्यते ॥ १५८ ॥

॥ इति गन्धाः ॥

अथ सर्वपुष्पाणां पुष्पान्तरसौरभार्थं सुगन्धापहारप्रयोगांस्तयाचाह —

कण्टअकरञ्जफळगिरिमूळासुम्मीसिएण व जळेण ।
धोआण णिरअगन्धो णासइ णीसेसकुसुमाण ॥ १५९ ॥

कण्टक(तरु?)करञ्जफलगिरिमूलोन्मिश्रितेन वा जलेन ।
धौतानां निजगन्धो नश्यति निःशेषकुसुमानाम् ॥

कण्टककरञ्जस्य तिक्तपिच्छाख्यस्य फलानां योगीनिमज्जूमूलधातयोरेकतरस्य निष्पन्देन भावितं यत् सलिलं तेन प्रक्षालितानां सर्वपुष्पाणां स्वामोदो नश्यति । पुष्पान्तरसौरभापादनं नश्यतीति ॥ १५९ ॥

विमळसिळापक्खाळिआण धूवोव्वकुसुमपाणो व्व ।
मोचेणत्ताण हिज्जाइ विहिणा मोचेअसंकमइ ॥ १६० ॥

(विमलशिलाप्रक्षालितानां .... .... ... ।
.... ... .... .... .... ॥)

विमलशिलातलप्रक्षालितानां ततः पुनः स्वच्छेन हरीतकीचूर्णमिश्रेण वारिणा धौतानां स एवोक्तेषु धूपेषु मध्यधूपस्तदामोदसंक्रमणपर्याप्तविधानेन

समर्प्यते । पुष्पान्तराणामधिवासे तथैव समर्प्यते स एव तेषां परिणमति येन धूपेन पुष्पाधिवासेन वासेस्य गन्धिवासन्ते तदामोदारमे (?) तदात्मैव तानि भवन्ति । निजगन्धस्तेषां मनागपि नोपलभ्यत इति ॥ १६० ॥

अइमासलपरिमलतुलिअमालईपमुहकुसुमगन्धेहिं ।
गन्धेण को ण हरिअइ विअड्ढजणहिअअदइएण ॥ १६१ ॥

अतिमांसलपरिमलतुलितमालतीप्रमुखकुसुमगन्धैः ।
(गन्धेन) (केन ? को न) प्रीयते विदग्धजनहृ(दय)दयितेन ॥

इत्युक्तेन प्रकारेण जनितो यः सान्द्रसौरभविशेषस्तेन स्पर्धितसुमनःप्रभृतीनां पुष्पाणामधिवासस्य पुष्पव्यतिरिक्तामोदस्तैस्तादृशैरुक्तैर्गन्धैः सुरभिद्रव्यविशेषालकैर्नागलोकमनोवल्लभैः को नामाख्याना वक्ष्यते (?) । गाथयानया गन्धद्रव्याणामन्यपुष्पेष्वन्यपुष्पसौरभोत्पादनरूपा शक्तिः प्रतिपादितेति ॥१६१॥

अथ प्रयोगान्तर्गतद्रव्यपेक्षया हिरिद्राहरिद्रापेक्षया (?) हिरिद्राहरिद्रया शोधनप्रकारमाह —

खण्डखण्डाइकआ दसरत्तं तक्कसंसण्ठआ रअणी ।
सुज्झइ सुधोअपिट्ठा पच्छा गुळधूविआ बहुसो ॥ १६२ ॥

खण्डखण्डीकृता दशरात्रं तक्रसंस्थिता रजनी ।
शुद्ध्यति सुधौतपिष्टा पश्चाद् गुल्दधूपिता बहुशः ॥

हरिद्रा एवं विशुद्धिं प्राप्नोति । कथम् । प्रथमं दलशो विदारिता ततो मासत्रिभागमात्रं गोरसमध्ये स्थापिता तत उद्धृत्य प्रक्षालिता सूक्ष्मचूर्णिता तदन्ते गुलेन बहुवारं दत्तधूपा । एवं विशुद्धायाः प्रयोगमस्या वक्ष्यतीति ॥ ॥ १६२ ॥

अथ गोरोचनिकायास्तस्य प्रयोगान्तरोपयोगिनीं शुद्धिमाह —

घणधवलंसुअघोअकुसुंभविविहिधुअणाणिम्मळा होइ ।
रोअणिआ गन्धदळतेल्लोल्ला दुग्धसञ्जुत्ता ॥ १६३ ॥

घनधवलांशुकधौतकुसुम्भविविधधावननिर्मला भवति ।
रोचनिका गन्धदलतैलार्द्रा दुग्धसंमिश्रा ॥

रोचनिका काम्पिल्यकं सा परिस्वमाणानां गन्धद्रव्याणां दलमाः गैरकार्थं दातव्यमित्यर्थः । तदेवं शुद्धा भवति । सधिततसितवस्त्रधूतस्य कुसुम्भस्य

पत्राङ्कस्य यो विधिः तेनैव विधिना यत् प्रक्षालनं तेन निर्मला सम्पद्यते । ततस्तैलेनार्द्रीकृता तेन क्षीरमध्ये कर्पटाभ्यन्तरे निक्षिप्य तद्रूप्मस्नेहसङ्क्रमणान्मृदुत्वमापन्ना सती सिद्धा भवति । (स ए? से)वंविधा वक्ष्यमाणगन्धद्रव्यसंस्कारयोग्यतां प्राप्नोतीति ॥ १६३ ॥

णहपक्कतिल्लवट्टिअकुसुंभचुण्णेण कुङ्कुमं होइ ।
णहपञ्चभाभसणाहसालिदसभाअसहिएण ॥ १६४ ॥

नखपक्वतैलवर्ति(त)कुसुम्भचूर्णेन कुङ्कुमं भवति ।
(नखपञ्चभागसनाथशालिदशभागसहितेन ॥)

नखपञ्चभागसनाथशालिदशमेनांशेन युक्तं तेन वर्णसौरभाभ्यां कुङ्कुमतुल्यत्वात् कुसुम्भमेव चूर्णमेवानया युक्त्या समालम्भनाद्युपयोगि कुङ्कुमपङ्कत्वमापद्यत इति ॥ १६४ ॥

करिकररुहपूइमुराविसल्लिअतुल्ला करेइ रोअणिआ ।
कुङ्कुमकज्जं लडहंगणाण लक्खारसुम्मीसा ॥ १६५ ॥

(करिकररुहपूतिमुराविसल्लितुल्या करोति रोचनिका ।
कुङ्कुमकार्यं लडहाङ्गनानां लाक्षारसोन्मिश्रा ॥)

करिकररुहपूतिमुरामांसीनां समांशानां तुल्यपरिमाणा । यावत्परिमाणानि मां(स्यां ता? स्यन्ता)नि द्रव्याणि तावत्परिमाणा (न?) रोचनिकेत्यर्थः । तथा लाक्षाया द्रुमव्याधे रसेन भाविता इत्थं वर्णसौभाग्यं कुङ्कुमसादृश्यमापन्ना समालम्भनादिकुङ्कुमकार्यं करोतीति ॥ १६५ ॥

मासदिसावसुरसवेअजलणसरिसेहिं किमिरसोव्वेहिं ।
चोलणिसाणए(चन्दण)कुसुंमहिंगुलुभभाएहिं ॥ १६६ ॥
पिट्ठेइ माल्लईकुसुम(वास)सुरभिसकअं सवीअंसं । ...
सेवेह गन्धमिमिणो लहुइ(क)अकुम्निणमाहप्पं ॥ १६७ ॥

मासादिग्वसुरसवेदज्वलनसदृशैः कृमिरसार्द्रैः ।
चोलनिशानपचन्दनकुसुमादिगुलुकभागैः ॥
पिष्टैर्मालतीकुसुमवाससुरभीकृतं सवीजांशम् ।
सेवध्वं गन्धमिमं लघूकृतकुङ्कुम(गन्ध?)माहात्म्यम् ॥

इमं भजध्वम् अधरीकृतसान्द्रकाश्मीरकममावं वर्णसौरभसंवादादुत्कृष्ट॰ कुङ्कुमतुल्यमित्यर्थः । कैर्द्रव्यैः साधितम् । रसजलशुक्तिमलयपद्मकदरदाना॰ मंशैः । किंपरिमाणैः । मासादिसङ्ख्यासमानैः । तेन चोलस्य द्वादशांशा मास॰ तुल्याः, निशाया दश दिनतुल्याः (नखस्य वसुतुल्या अष्टांशा)श्चतुर्थस्य (चन्दनस्य) षड् रसतुल्याः कुसुम्भस्य चत्वारो वेदतुल्याः हिङ्गुलकस्य त्रयः अग्नितुल्याः इत्येवं परिमाणैर्भागैः । सर्वैः सह पिष्टैः पङ्कैः कृमिरसेनालक्तके॰ नार्द्रीकृतैः । कीदृशं गन्धम् । सुमनःपुष्पाधिवाससुगन्धीकृतं तथा बीजस्य प्रकृतिभूतस्य कुङ्कुमस्यांशेनैकेन भागेन शोभितमिति ॥ १६६, १६७ ॥

कुट्ठक्कुसुम्भअमाळाणहणिंवक्खेउरहिंगुळुनिसाहि ।
सरिसाहि कुणह गन्धं तुळिउन्भडकुङ्कुमं सिसिरे ॥ १६८ ॥

कुष्ठकुसुम्भकमालानखनिम्बनिर्यासहिङ्गुलनिशाभिः ।
सदृशीभिः कुरुत गन्धं तुलितोद्भटकुङ्कुमं शिशिरे ॥

कररुहघणघुसिणमुज्जळचारुवण्णअं ।
टंकणकळ्ळोहणहचन्दणसाळिसमभाअं ॥ १६९ ॥

.... .... .... .... ... ....
... ... ... ... ... ...

भागार्धार्धतुलितरसवेवीनिद्याद्गीबेरमिश्रितं पञ्चगुणसम्मिलितकपित्थक॰ मस्थिरनखेक्षुपूर्ण(तमिमं ? सं) गन्धमिमं कुरुत घनकुङ्कुमसमुज्ज्वलं चारुवर्ण कम् इमं गन्धं सान्द्रारुणलोहितरमणीयच्छायं साधयत । कीदृशम् । समानानि तुल्यांशानि सुवर्णपात्रकाजटिलागुरुकरजमलयशालिजातकानि यस्मिंस्तथा भाग॰ स्यार्धार्धेन प्रत्येकं तु भागेन तुलितैर्बोलप्रकारजनितफलैः ॥ १६८, १६९ ॥

... ... ... ... ... ... |

.... .... .... कप्पूरचेउगुणम्मीसं ॥ १७० ॥
वसुसमसामासहिअं माळइकअवासमिन्दुमअविद्धं ।
गिम्हम्मि कुणह गन्धं मेळिअमुहळाळिणिकुरुम्बं ॥ १७१ ॥

शालिरसशुक्तिमालामलयसमं कललरचितम् ।
द्विगुणांशं पञ्चगुणंजलसलिलं कर्पूरचतुर्गुणोन्मिश्रम् ॥
वसुसमश्यामासहितं मालतीकृतवासमिन्दुमदविद्धम् ।
ग्रीष्मे कुरुत गन्धं मेलितमुखरालिनिकुरुम्बम् ॥

इमं गन्धं शीतलं निवाघकाले साधयत । कीदृशम् । उत्कृष्टामोदत्वादाकृष्टकृतकलकलमधु(क)रकुलम् । कीदृङ्मात्रम् । शालिजातकबोलनखस्पृक्काचन्दनानि तुल्यांशानि यस्मिंस्तथा । मांसा सम्पादितौ द्विगुणांशौ यस्मिंस्तथा । पञ्चगुणे प्रत्येकं भागपञ्चकपरिमाणे शालिपुष्पवालके यस्मिंस्तथा । कललेन चतुर्गुणेन सहितम् । तथा वसुसमया भागाष्टपरिमाणया हलिन्या युक्तम् । सुमनःपुष्पैर्दत्ताधिवासम् । तथा वेधमात्रया कर्पूरकस्तूरिकाभ्यां कृतवेधकमिति युगलकम् ॥ १७०, १७१ ॥

**ओहसणिहइमलअविंसउणं सणाहआ दो भाआ ।**
**कुङ्कुमस्स मज्जादूधुम्मीसिआ गिरितिहलाभाअआवि [ ॥ १७२ ॥**

**वाणाणलकअकसंघाआ गन्धेण ए ।**
**पहुलम्मि माळाईससिविद्धए(?) ॥ १७३ ॥**

चन्द्रर्पणनिघृष्टमलयविंशतिगुणं समनाथौ द्वौ भागौ ।
कुङ्कुमस्य मज्जाधोन्मिश्रौ गिरित्रिफलाभागावपि ॥

बाणानलसंख्यागन्धे रतिवल्लभाख्ये गन्धे सुमनःपुष्पकृताधिवासना समृगमदकर्पूरकृतवेधे चैव । द्रव्यमात्रा कथम् । परुषशिलातलनिघर्षस्य चन्दनस्य विंशतिगुणैर्भागैः सहितं, द्वौ द्वावक्षारुणस्य शालिजातकस्य भागार्धेन संयुक्तौ तथा शिलापुष्पस्य सुगन्धत्रिफलायाश्चाप्यंशौ यथाक्रमं बाणैः पञ्चभिरनलैस्त्रिभिश्च भागैर्विहितचरणौ । पञ्च गिरेर्भागास्त्रयश्च त्रिफलाया इति ॥ १७२, १७३ ॥

**समकप्पूरकोसदळवाळसमट्ठउणं ससिरिअं विउणम् ।**
**णरेन्ददेवितुडिणहजळमूअहिसमाणघुसिणअं ॥ १७४ ॥**
**घुसिणचउग्गुणसरळमीसिअमाळईकअजाइयासअं ।**
**मअकप्पूर(अ)विद्धमइसुन्दरं विरएह वण्णअं ॥ १७५ ॥**

समकर्पूरकोशदलवालसमष्टगुणं सश्रिश्रिरं द्विगुणम् ।
नरेन्द्रदेवीतुटिनखजलमुदधिसमानकुङ्कुमम् ॥
कुङ्कुमचतुर्गुणसरलमिश्रितलतु(?)कृताजातिवासम् ।
मदकर्पूरविद्धमतिसुन्दरं विरचयत वर्णकम् ॥

इदमत्यन्तरमणीयं वर्णकं विलेपनद्रव्यं विभत्त। कीदृशम्। तुल्यांशानि मलयजातिपत्रिकागुरूणि यस्मिंस्तत्तथा कुङ्कुमनासीरेण पश्चात् सुमनःपुष्पैर्दत्ताधिवासं वेधमात्रया च कस्तूरिकाघनसाराभ्यां कृतवेधमिति ॥ १७४,१७५ ॥

फअळेळारसळवंगणहकक्कोळअकोसआ ।
ओहसणणिहट्ठमळअविंसउणुम्मीसिआ ॥ १७६ ॥
चुण्णमिणं मअमिअंकविरइअमणहरवेहअं
जोग्गं पुहईपईणा मेळिअमहुअरणिवहअं ॥ १७७ ॥

फललैलारसलवङ्गनखकक्कोलकोशाः ।
उद्धर्षणनिघृष्टमलयविंशतिगुणा सोन्मिश्राः ॥
चूर्णमिदं मदमृगाङ्कविरचितमनोहरवेधकम् ।
योग्यं पृथिवीपतीनां मेलितमधुकरनिवहम् ॥

इदमेवंविधं सुगन्धिचूर्णम् । कीदृशम्। अतिसौरभाधाकृष्टभ्रमरवृन्दमत एव राज्ञामुचितम् । कीदृश्मात्रम् । कच्चूरत्रुटिबोलसुमनःशुक्तिगोलकजातिपत्रिकाः समांशाः । कीदृश्यः शिलातलनिघर्षचन्दनस्यपूर्वभागापेक्षया विंशत्या भागैः सहिताः । कीदृशं चूर्णम्। कर्पूरकस्तूरिकाभ्यां सम्पादितः सुन्दरो वेधो यस्य तत् तथेति ॥ १७६,१७७ ॥

विळळकइत्थंकुळाण(मूळ)मेक्कस्स मसिणाविणिहट्ठं ।
चन्दणपाअुम्मीसं कमधूविअवासिअं बहुसो ॥ १७८ ॥
ससिक(को?पो)लकविद्धं गन्धाणिअसुळहमहु(अ)रुक्खाअं।
कुणह विळेवणमिमिणो ळहुइअहरिअन्दणामोअं ॥ १७९ ॥

विल्वकपित्थाङ्कोलानां मूलमेकस्य मसृणविनिघृष्टम् ।
चन्दनपादोन्मिश्रं क्रमधूपितवासितं बहुशः ॥
शशिकक्कोलकविद्धं गन्धानीतसुलभमधुकरोद्धातम् ।
कुरुत विलेपनमिदं लघूकृतहरिचन्दनामोदम् ॥

इमं समालम्भनं सम्पा(दे?दय)त । कीदृशम् । अधरीकृतमघृष्टमलयजसौरभम्। अत एव सौरभात् पतदलिकुलम् । किंरूपम् । मालूरदधित्थाङ्कोलानामेकतमस्य सूक्ष्मपिष्टमूलम्। कीदृशम् । मलयस्य चतुर्भागेन सहितम्। तयोस्तानां क्रमधूपानामेकतमेन धूपितम् । तयोत्कृष्टैः पुष्पैर्बहुवारकृताधिवासं पश्चात् कर्पूरकोलकाभ्यां कृतवेधमिति ॥ १७८, १७९ ॥

सिअणिम्बदारुसुरतरुचन्दणपङ्केहि चन्दण होइ ।
वीसेकरुन्दलोअणभाअविअप्पेण मिलिएहि ॥ १८० ॥

सितनिम्बदारुसुरतरुचन्दनपङ्कैश्च चन्दनं भवति ।
विंशत्येकरुद्रलोचनभागविकल्पेन मिलितैः ॥

चन्दनमेतैर्भवति । कैः । श्वेतपिचुमन्दकाष्ठेन तथा देवदारुणा तथा मलयजकर्दमेन । एतैः कीदृशैः । यथासङ्ख्यैर्विंशत्या तथैकेन तथा रुद्रलोचनैस्त्रिभिरित्येवमंशकल्पनमाश्रितैरिति ॥ १८० ॥

कच्चूरसुराजलकललकङ्कुतिउणो कलम्बतरुपङ्को ॥
होइ गुलसिप्पिपक्को विलेवणं वासिओ विहिणा ॥ १८१ ॥

कच्चूरसुराजलकललकङ्कुत्रिगुणः कदम्बतरुपङ्कः ।
भवति गुलशुक्तिपक्वो विलेपनं वासितो विधिना ॥

समालम्भनमिदं भवति । कदम्बवृक्षस्य निघृष्टस्य सम्बन्धी कर्दमः मलयसुगन्धमुराबालमांसीप्रियङ्गुभ्यः समांशाभ्यः त्रिगुणस्तथा गुलनखाभ्यां पक्वः माग्नु(स ? च)युक्त्या धूपदानेन परिशोषितः पश्चात् पूर्वोक्तविधानेन दत्तपुष्पाधिवास इति ॥ १८१ ॥

मसिणविणिहट्ठकङ्कअपङ्को दसभाअचन्दणुम्मीसो ।
वण्णेण परिमलेण अ सुन्दरम(णीलअ)च्छविं वहइ ॥ १८२ ॥

मसृणविनिघृष्टकङ्कतपङ्को द(ल ? श)भागचन्दनोन्मिश्रः ।
वर्णेन परिमलेन च सुन्दरम(णि ? णय)च्छविं वहति ॥

कङ्कतस्याशोकस्य निघृष्टस्य (शत ?)सम्बन्धी कर्दमः सुभगस्य चन्दनस्य वर्णसौरभाभ्यां शोभां धारयति । कीदृशः सन् । दशभागेन दशमेनांशेन मलयस्य सहित इति ॥ १८२ ॥

कच्चूरसिवादाणवकुट्ठेहि समेहि मलअपडिरूवं ।
गन्धं कणिआरपसूअतअरकुट्ठेहि वा कुणह ॥ १८३ ॥

कच्चूरशिवादानवकुष्ठैः समैः (तथा ?) मलयप्रतिरूपम् ।
गन्धं कर्णिकारप्रसूनतगरकुष्ठैर्वा कुरुत ॥

चन्दनप्रतिरूपं गन्धं सम्पादयत । कैः कज्जलहरीतकीपुरायाप्यैः समांशैः । अथवा कर्णिकारस्यारग्वधस्य पुष्पैस्तथा कुटिले(न कुष्ठे)नैतैः समांशैरिति ॥ १८३ ॥

घिमळजळमसिणवट्टिअपरिणअमाळूरखप्परुप्पङ्को ।
चन्दणपाअम्मीसो चन्दणकरणिं समुव्वहइ ॥ १८४ ॥

विमलजलमसृणवर्तितपरिणतमालूरकर्परोत्पङ्कः ।
चन्दनपादोन्मिश्रश्चन्दनकरणिं स(मु)द्वहति ॥

निर्मलजलेन सूक्ष्मपिष्टस्य पक्वस्य बिल्वकपाटस्य सम्बन्धी कर्दमो मलयजसादृश्यं धारयति । कीदृशः । मलयजस्य चतुर्थेनांशेन संयुक्त इति ॥ १८४ ॥

मळउब्भवदलकच्चूरकरिसळिळेहि सरिसभाएहि ।
सेअसिवाकञ्चिअकढिअ(णिम्ब)छल्लीहि विउणाइ
[ ॥ १८५ ॥

मिसिभाअ(द्ध)म्मीसाइ मसिणापिट्ठाहि कुणह हेमन्ते ।
गन्धं तुळिआगरुगुरुअगोरवं तुहिणपडिपक्खं ॥ १८६ ॥

मलयोद्भवदलकच्चूरकरिसलिलैः सदृशभागैः ।
श्वेतशिवाकाञ्चिकक्कथितनि(म्ब)च्छल्ल्या द्विगुणया ॥
मिसिभागार्धमिश्रया (मस्प ?)मसृणपिष्टया कुरुत हेमन्ते ।
गन्धं तुलितागरु···गौरवं तुहिनप्रतिपक्षम् ॥

गन्धमिमं शीतकाले कुरुत । कीदृशम् । स्पर्धितलघुतौगन्ध्यपरिणामं तथा (शनम ? तुहि)नस्य प्रतियोगिनम । केन द्रव्येण । चन्दनसिल्हकलवं पच्य(?)केसरवां सहितैः समांशैः । तथा शुक्लहरीतकीसहितेन करल्केन काथयुक्त्या क्वथितया पिचुमन्दत्वचा भागद्वयपरिमाणया तथा शतपुष्पया भागार्धेन सहितया सूक्ष्मसञ्चूर्णितयेति युगलकम् ॥ १८५, १८६ ॥

कच्चूरवारिचन्दणचळचिहुरसमं कुणह हेमन्ते ।
वहुपाअद्धसणाहं लहुइअलहुपरिमळं गन्धं ॥ १८७ ॥

कच्चूरवारिचन्दनचलचिहुरसमं कुरुत हेमन्ते ।
वधूपादार्धसनाथं लघूकृतलघुपरिमलं गन्धम् ॥

एवमपि हेमन्त एव निर्जितागुरुसौरभगन्धं साधयत । कीदृशम् । कलयश्चानेक(?)मलयसिलकबालकानि समांशानि यस्मिंस्तत् तथा । वध्वाः स्पृक्कायाः पादार्धेनाष्टांशेन सहितमिति ॥ १८७ ॥

रोहिअकुसुमुम्मीसारणाळतुळसीदळेहि सिद्धा(थीइ) ।
गन्धदळा होन्ति सुसोसिआइसिरमिरमूळाइं ॥ १८८ ॥

रोहितकुसुमोन्मिश्रितारनालतुलसीदलैः (सिद्धानि) ।
... ... ... ... ... ... ॥

सिद्धानि वक्ष्यमाणानां गन्धानां दलभूतानि भवन्ति । कीदृशानि । रोहितस्य कुङ्कुमस्य पुष्पैः सहितं यत् काञ्चिकं तस्मिंस्तुलसीदलैः सुगन्धैः सुरतपत्रैः सह क्वाथयुक्त्या सम्पादितानि तत उद्धृतशोषीकृतचूर्णानि ॥ १८८ ॥

सुकढिणकइत्थयक्कळसण्डुळओ पञ्चवक्कळो कढिओ ।
कइचुण्णो गुच्छासुचहुसुमाणायोळसंवलिओ ॥ १८९ ॥

सिक्को पिट्ठो पि पुणो(पुणो) वि णाणाअधूइओ बहुसो ।
कापित्थजोअजोग्गो जोअइ कअमलिळआवासो
[ ॥ १९० ॥

सुकठिनकपित्थवल्कल(तण्डुलक): पञ्चवल्कलः क्वथितः ।
कृतचूर्णो गुच्छासवमालवेलसंवलितः(?) ॥

स्विन्नः पिष्टोऽपि पुनः पुनरपि नाराचधूपितो बहुशः ।
कापित्थयोगयोग्यो जायते कृतमल्लिकावासः ॥

पक्वत्वात् सुकर्कशस्य कपित्थस्य वल्कलैरन्तर्बहिः सतण्डुलः बीजसमूहः कपित्थनिर्गन्ध्य(?)वर्णगन्धयोगोचितो भवति । कीदृशः सन् । पञ्चभिः कपित्थाम्रजम्बीरबीजपूरबिल्वानां सम्बन्धिनीभिस्त्वग्भिः क्वाथयुक्त्या जलेन क्वथितः, तत उद्धृत्य सूक्ष्मपिष्टः स पूर्वोक्तधूपनयुक्त्या नाराचधूपेन चन्दनादियोगव्यवहितेन धूपितः पश्चान्मल्लिकापुष्पैः कृताधिवास इति । युगलकम् ॥ १८९,१९० ॥

अरणिच्छाल्लिकुचन्दणकाळेअअमोअआण एक्कक्कं ।
जाइ विळेवणजोग्गं कअ परिअम्मं विहाणेण ॥ १९१ ॥

(अरणिच्छाल्लिकुचन्दनकालेयकपद्मकानामेकैकम् ।
जायते विलेपनयोग्यं कृतपरिकर्मा विधानेन ॥)

अरणिच्छल्ली कुचन्दनं रक्तचन्दनं तथा पद्मकं कालेयकं पीतसारमेतेषामन्यतमं (चन्द ?) पूर्वोक्त(कृति ?)संस्कारक्रमेण सम्पादितपरिकरं सत् समालम्भनोचितं चन्दनादिरूपं सम्पद्यत इति ॥ १९१ ॥

कापित्थी घणचन्दणमुणाळकरिकामिणीहि सरिसाहि ।
तुडिसालिसेअपाएहिमेळिआ होइ सुसुगन्धा ॥ १९२ ॥

कापित्थी घनचन्दनमृणालकरिकामिनीभिः सदृशीभिः ।
तुटिशालिशैलपादोन्मेलिता भवति सुसुगन्धिः ॥

कापित्थी उक्तक्रमेण शोधितकपित्थचूर्णं सा सुष्टु श्रीकामदा भवति । कीदृशी । एतैर्मिश्रिता । कैः । मुस्तागल्योशीरनागकेसरप्रियङ्गुभिस्तुल्यांशाभिः । तथैवैलाशालिजातकशिलापुष्पाणां (चतुर्थेन ?) चतुर्थेनांशेन संयुक्तकश्यामा शालिजातकश्यामार्धभागेनोद्दामसौरभाः(?) दशगुणैः शोधितकपित्थचूर्णमेतैर्मिश्रिता इति । गन्धविधिः पश्चात् कस्तूरिकाकर्पूराभ्यां वेधमात्रया कृतवेध इति ॥ १९२ ॥

सालिमुरासेळरसेहि सरदिसातिहिमिअंकसरिसेहि ।
गुणिमणिणहाइधूएहि केअईदोसिओ दप्पो ॥ १९३ ॥

शालिमुराशैल(र)सैः शरदि(क्)तिथिमृगाङ्कसदृशैः ।
गुणिमणिनखादिधूपैः केतकीवासितो दर्पः ॥

एतैर्द्रव्यैर्दर्पः कस्तूरिका सम्पद्यते । कैः । शालिजातकमुगन्धमुराशालिपुष्पशैलेर्यथाक्रमं शरादिसदृशैः । तेन शरैः पञ्चभिर्भागैः शालिजातकं दिग्भिर्दशभिर्मुरा तिथिभिः पञ्चदशभिः शैलेयं मृगाङ्केनैकेन बोलमित्येवंविधांशैः । कीदृशैः । गन्धसर्जरसयुक्तयादिभिः, पूर्वोक्तैर्धूपद्रव्यैर्धूपो धूपनं येषां तैः । कीदृशो दर्पः । केतकीपुष्पैः कृताधिवासः उक्तभागक्रमेणैतानि द्रव्याणि मिश्रितानि धूपितानि केतक्यधिवासितानि सन्ति कस्तूरिकातुल्यामोदानि भवन्तीति ॥ १९३ ॥

मअदप्पमिअंकाउ(रु)कईहि विउणीकएहिविडाए ।
हिंगुलुअमळअभाएहि गअणचन्दप्पंहाणेहि ॥ १९४ ॥
पसुपइजळेण पिट्ठा पिका कुंगाइअम्मि (पडि ? पुड)
[विहिणा ।
केअइपसूअवासेण मणहरा होइ मअणाही ॥ १९५ ॥

मृगदर्पमृगाङ्कागुरुकपिभिर्द्विगुणीकृतैर्वाज्या ।
हिङ्गुलुकमलयभागाभ्यां गगनचन्द्रप्रमाणाभ्याम् ॥
पशुपतिजलेन पिष्टा पक्त्वा लुंगादिके (प ? पु)टविधिना ।
केतकीप्रसूतवासे मनोहरा भवति मृगनाभिः ॥

पूर्वोक्तपुटपाकेन विधिना लुङ्गादिके मातुलुङ्गादौ आदिग्रहणान्नारङ्गबीजयोः पूर्ववत् पक्त्वा। कैर्द्रव्यैः। (कस्तूरिकाकर्पूरसिल्हकैः?) कस्तूरिकाकर्पूरलोहसिल्हकैः परिपाट्या उत्तरोत्तरेण द्विगुणीकृतैः तथा दरचन्दनयोः प्रत्येकैनैकेन भागेन गगनचन्द्रभागाभ्यां युक्तेनेति॥ कस्तूरिकाकृतिः ॥ १९४, १९५ ॥

आसवजोएण विणा ण होन्ति गन्धा विअद्ढजणदइआ।
आसवपरिअम्ममिणं संपइ भणिमो समासेण ॥ १९६ ॥

आसव(म ?)योगेन विना न भवन्ति गन्धा विदग्धजनदयिताः ।
आसवपरिकर्मेदं सम्प्रति भणामः समासेन ॥

प्रस्तुतानामासवानामुक्तगन्धसंस्कारवदवश्यकरणीयत्वप्रतिपादनार्था सुष्टा गाथेति ॥ १९६ ॥

कुट्ठसरोरुहकेसरबिल्लज्जुणकुसुमचुण्णकअगब्भं ।
महुसहि(य ?)आ सुरहिजळं ज(ळ ? उ)सारिअसारि-
[आवत्ती ॥ १९७ ॥
अअणा(भं ? ट्ठं) गोट्ठट्ठिअमिणमो छ्ंसेण उणदळाणं वि ।
कुणइ मअदप्पगन्धं किं पुण (ज ? जु)त्ती विसेसाण
[॥ १९८ ॥

कुष्ठसरोरुहकेसरबिल्वार्जुनकुसुमचूर्णकृतगर्भम् ।
मधुसहितं सुरभिजलं जतुसारिकसारिकापात्रम् ॥
अय(न ? नार्ध)गोष्ठस्थितमेतत् स्पर्शेन तृणजलानामपि ।
करोति मृगदर्पगन्धं किं (प ? पुन)र्युक्तिर्विशेषाणाम् ॥

इदं द्रव्यं कस्तूरिकामोदं स्पर्शेन निर्वर्तयति। कस्य। त्रिगुणमात्राणामपि(?)। किं पुनरुक्तादीनां योगान्तराणाम्। कीदृशम्। मासत्रयमात्रं गोष्ठस्थितं गोनिवासस्थानस्थितम्। किं तद्रूप्यमर्धं करोति(?)। कीदृशम्। वाप्यपद्मकिञ्जल्कमालूरककुभपुष्पाणां चूर्णेन कृतगर्भम्। गर्भे तानि विन्यस्येत्यर्थः। अन्यच्च कीदृशम्। मधुसहितशर्करागोमूत्रेण च वर्तते तथाविधम्। कूपाधारे कृतगर्भे जतुना द्राविते(न) विलिप्तं यद् भाजनं तस्मिन्। अत्र मात्रा — कुष्ठादीनि चत्वारि समांशानि। चत्वारि यावत्परिमाणानि ततोऽष्टगुणं मधु। मधुसमं च गोमूत्रम्। कुष्ठादीनां च सर्वेषां तुल्या शर्करेति समं जतुलिप्तमृद्भाण्डावस्थितं मासत्रयमात्रात् कस्तूरिकासौर(भ)जनकं सर्वं सम्पद्यते। सर्वासवानामनुक्तविशेषाणामयमेव मात्राक्रम इति युगलकम्॥ १९७, १९८॥

**(म्ह?प)ल्ल(व)कढिअन्धारिसमभाअमीसिओ पिक्कओ।**
**केअइणवपसूअदळखण्डअणिवगुणभित्तिओ॥ १९९॥**
**सौभञ्जणअसळिळदणुआहिवसळिळपाडाविळित्तओ।**
**णिम्मळभाअणम्मि सत्ताहमिमो (वणोऽधण्णो)अरट्ठिअओ॥ २००॥**

**अइपसरन्तामोओ कुसुमरसो हंसएण गन्धा(ण)।**
**कुणइ विणिज्जिअदप्पपरिम(ळम्म? ळं च)हुमअं विअड्ढाण॥ २०१॥**

पल्लवक्वथि(ता? त) वारिसमभागविमिश्रितः पक्कः।
केतकीनवप्रसूतदलं खण्डविमिश्रितं विहितम्॥
सौभञ्जनकसलिलदनुजाधिपसलिलपाडाविलिप्तः।
निर्मलभाज(न? ने) सप्ताहमयं धान्योदरस्थितः॥
अतिप्रसरामोद(:) कुसुमरसकेन गन्धानाम्।
करो(ति) विनिर्जितदर्पपरिमलकं बहुमतं विदग्धानाम्॥

अयमतिशयप्रसर्पत्सौगन्ध्यकुसुमरसो माक्षिकयुक्तानां मात्रेणाभिभूतमृगमदामोदं सौरभं सम्पादयत्यत एव भुजङ्गलोकवल्लभः। कीदृशः सन्। कुसुमरस(:) पूर्वोक्तैः पञ्चभिः पल्लवैः क्वाथयुक्त्या क्वथितं यज्जलं तत्समेन भागेन सहितस्तथा विप(क्व? क्वः) ततः केतकीप्रसूत्यग्रपुष्पैः सम्मिलितः सकलैर्मिथितः स निर्मले भाण्डे विनिक्षिप्तः। कीदृशः सन्। शिग्रुमूलरसेन तथा युगन्धमुरायालकमांसीभिः पिष्टाभिर्विलिप्तः। भाण्डस्य विलेपनात् रसो विलिप्त इत्युपचारादुक्तम्।

तनः सप्तरात्रं धान्यराश्यन्ते स्थितः । अयमस्य मध्वासवस्य साधनविधिः— पक्के पल्लवक्वाथितेन जलेन सह तुल्यं माक्षिकं पक्त्वा माक्षिकशेषं गृहीत्वा केतकीपुष्पपल्लवखण्डविमिश्रितं शिग्रुमूलरसपिष्टाभिर्मुरावालकमांसीभिर्विलिप्ते भाण्डे निक्षिप्य सप्तरात्रं धान्यमध्ये स्थापनीयमिति युगलकम् ॥१९९–२०१॥

भाओ भाओ सुरतरुगुळाण सोळह सिग्गुसलिळस्स ।
रविपिक्कं तिहळाविद्धमासवं कुणह सुसुअन्धं ॥ २०२ ॥

भागो भागः सुरतरुगुलयोः षोडश शिग्रुसलिलस्य ।
रविपक्कं त्रिफलाविद्धमासवं कुरुत सुसुगन्धि ॥

इममासवं सुष्ठु सामोदं साधयत । सुगन्धत्रिफ(लायाः ? लया) कृतवेधम् । कीदृगूपम् । देवदारुगुलयोः समांशं सौभञ्जनमूलरसस्य षोडशभागा इत्येतन्मिश्रीकृत्य पक्कमात्रं सूर्यातपेन क्वथितमिति ॥ २०२ ॥

समहिङ्गुतुडितमाळतअतअरुप्पळचुण्णओ ।
.... .... .... .... .... ॥ २०३ ॥
.... .... ... .... .... ... ।
.... ... .... .... .... ॥ २०४ ॥

समहिङ्गुत्रुटितमालत्वक्तगरोत्पलचूर्णः ।
निर्मलगुडमिश्रशिग्रुमूलरसे विहितः ॥
मल्लितशुभमल्लकश्चूर्णितयवसंयुक्तः ।
जायते क्षणमात्रकेणासवः सुसुगन्धिः ॥

आसवानां विविधा सिद्धिः कलान्तराभिवानीयत (?) । तत्रायमासवः क्षणमात्रकेण सद्य एव सम्पद्यते । तुल्यांशानां दरलेखागन्धपत्राणां कुटिलकुष्ठानां चूर्णः । कीदृशः । शोधितेन गुलेन सहिते सौभञ्जनमूलनिष्यन्दे निक्षिप्तः ततो निर्मले मृत्पात्रे मृदितः ततो यवचूर्णस्तोकेन मिश्रितः । अत्र मात्रा पूर्ववद् , यवचूर्णं तु गुलतुल्यमिति ॥ २०३, २०४ ॥

समतुळिअसुरारिवारिमळउब्भवमज्जारआ ।
.... .... ... .... .... ॥ २०५ ॥
.... .... .... ... .... ... ।
.... .... .... .... .... ॥ २०६ ॥

समतुलितसुरारिवारिमलयोद्भवमार्जारकाः ।
कुरुकक्कविसहितलभिश्रिताः कृतचूर्णाः ॥
जातिफलाष्टमभागबोधिता निक्षिप्ताः ।
सगुले शिग्रुरसे सद्य एवासवनिर्दीवकाः ॥

एते तात्कालिकस्यासवस्य सम्पादकाः । के ते । समां(शो ? शा) गन्धमुरावालकचन्दनपूतिकेशाः लोहारुणमांसीसिल्हकैः समांशैः सहिताः सन्तः पिष्टा मालतीफलस्याष्टमेनांशेन जनितामोदाः सन्तः साधितगुलसहिते सौभञ्जनमूलनिष्यन्दे न्यस्ताः । मात्रा पूर्ववदिति ॥ २०५, २०६ ॥

**समतुलिअसालपल्लवसुरगुरुमच्छण्डिआहि समहूहि ।**
**धूइओ गन्धासवभाअणाण भणिओ विअड्ढेहि ॥ २०७ ॥**

समतुलितसालपल्लकीसुरगुरुमत्स्यण्डिकाभिः समधुभिः ।
धूपो गन्धासवभाजनानां भणितो विदग्धैः ॥

अयं धूपः उक्तानां गन्धासवानां यानि सावनभाण्डानि तेषामधिवासनाय व्युत्पन्नैरभिहितः । कैर्द्रव्यैः । तुल्यपरिमाणाभिः सर्जरसकुन्देन्दुकीदेवदारुलघुशर्कराभिर्माक्षिकेण भाविताभिरिति ॥ २०७ ॥

**तह वासो कमवड्ढिअकक्कोळ(अ)मिरिअमाळइफळेहि ।**
**णिद्दिट्ठो ताणञ्चिअ मअलञ्छणपाअसहिएहि ॥ २०८ ॥**

तथा वासः क्रमवर्धितकक्कोलकमरिचमालतीफलैः ।
निर्दिष्टस्तेषामेव मृगलाञ्छनपादसहितैः ॥

तेषामेवोक्तानां भाण्डानामयमधिवासविशेष उक्तः । कैर्द्रव्यैः । उत्तरोत्तरैकांशातिरिक्तैः कोलतीक्ष्णजातीफलैः । कीदृशैः । कर्पूरस्य पूर्वद्रव्याणामेकतमेश्चतुर्थेनांशेन सहितैरिति ॥ २०८ ॥

आसवविधिः ।

**अद्धन्तणिम्मलफिअखण्डिअपरिभुञ्जिओ विहाणेण ।**
**पुणोपवण्णेहि अएणिमओइअ (?) ॥ २०९ ॥**
**एवं विह परिअस्स च सचिअन्भन्तमासलामत्ते**
**होइ अरेट्ठोक्खिअचारुकप्पूरवेधिओ (?) ॥ २१० ॥**

अत्यन्तनिर्मलीकृतखण्डितपरिवर्जिते विधानेन ।
उष्ण एव सिद्धार्थतैलदत्ताभ्यक्तनिर्वापितः ॥
कर्पूरतैलसिक्तः .... .... .... .... .... ....।
.... .... .... .... .... .... .... .... ॥

असारफलकोललवलीचूर्णे पिप्पलीचूर्णोन्मिश्रितैर्भाविते भूर्जविनिबद्ध-सितवस्त्रबाह्यवलितः सप्ताहं धान्यराशिविनिक्षिप्तः घनसारसहितः पुनरपि धान्योदरेऽपि निहित इत्येवंविधपरिकर्मवशविजृम्भमाणं मांसलमोदं भवत्यनरट्टकः चारुकर्पूरप्रतिरूपः । कर्पूरप्रकृतिरियम् । अनलट्टको द्रव्यविशेषो निष्पर्याय एव कर्पूरः सम्पद्यते । कीदृशः सन् । प्रथमं तावदतिशयेन शोधितः ततो दलशः कृतः ततः कर्पूरादौ दाहसङ्करक्षरूपेण विधिना ताडितः, ततो सोऽस्मै वसर्पतैलमनागत्यन्तसन्निधावपि (?) तु शीतलीकृतस्ततः कर्पूरतैलेनार्द्रीकृतस्ततस्त्वचा जातीफलतक्कोललताकस्तूरिकापिप्पलीनां समाशानां चूर्णैरवचूर्णितः सन् भूर्जपुटके निधाय ग्रथितस्योपरि शुक्लवस्त्रेण निर्विवरं कृत्वा वेष्टितः सन् सप्ताहोरात्रं धान्यराशौ स्थापितस्ततस्तस्मान्निष्कृष्य स्वापेक्षया कर्पूरस्य चतुर्थेनांशेन युक्तः सन् पुनरपि पूर्वयुक्त्यैव धान्यान्तरे सप्ताहमेवं स्थापित इत्थं यथोक्तेन परिकर्मणा संस्कारविधिना प्रसरत्सान्द्रसौरभः उक्तो द्रव्यविशेष एव श्रेष्ठकर्पूरतामापद्यत इति । चतुर्भिः कुलकम्(?)॥२०९,२१०॥

पक्खालिअणिच्चळीकअचुण्णिए ळहुन्दमकुडेओ ।
फक्कोळअ(मळ ?)मळअससिकरिसचुण्ण(सन्तेजोतो-
[? संजो)इओ वहळो ॥ २११ ॥
णिग्गन्धविमळकप्पाइताइमसिणचत्तोअट्ठिपट्ठाओ ।
ससिरूअरइअखण्डो ससिविद्धो होइ कप्पूरो ॥ २१२ ॥

प्रक्षालितनिश्चलीकृतचूर्णिते लघुशिग्रुकन्दरसङ्कुडयः ।
कक्कोलपेलशशिकर्ष(चूर्ण)संयोजितो बहलः ॥
निर्गन्धविलसरूप्यादिमसृणमात्रोदरे परिधानः ।
शशिरूपजितवेणुः (?) (श)शिविद्धो भवति कर्पूरः ॥

एष कर्पूरः सम्पद्यते कोद्रवविशेषः सुधौतस्तस्यापि सितत्वचस्ततः क्षुण्णस्वल्प .... .... सौमञ्जनमूलस्य यो निष्यन्दस्तस्य पलाष्टकपरिमाणो

भागः । कीदृशः । कोलचूर्णस्य प्रकुञ्चेन तथा कर्पूर .... .... शालितलेन मिश्रितः मन्दरीकृतः ततो निरुद्धद्रव्यान्तरगन्धरहितस्य सुप्रक्षालितस्य राजतादेः .... ... वर्णाश्मनप्रायस्य सुश्लक्ष्णस्याभ्यन्तरे परिधानः कठिनीभूतः सन् कर्पूरपलाशाकाराणि निर्मितानि शकलानि यस्य तादृशः कृतः पश्चादकृत्रि(मक)पूरेण कृतवेध इति । तिलकम् (?)॥ २११,२१२ ॥

घवगअकोसच्छाळिअविअउरपक्खचिणिहिअविपक्को ।
घाराइ तिण्णि साळो द(इओ ? सभा)उम्मीसओ चन्दो ॥

व्यपगतकोशोद्वर्तितबीजपूरमध्यनिहितपक्कः ।
घारांस्त्रीन् सालो दशभागोन्मिश्रितश्चन्द्रः ॥

सालसर्जरस एव कर्पूरो भवति । कीदृशः सन् । अपनीतान्तर्वर्तिके बीजादौ ततः परिवर्तितत्वचो मातुलुङ्गस्य गर्भे पूर्वोक्तयुक्त्या नवे नवे मातुलुङ्गे वर्तेत यं (?) कृतपाकः सन् ततो निष्कृप्याकृत्रिमकर्पूरचूर्णस्य दशसेनांशेन चूर्णेन युक्त्या मिश्रित इति । कर्पूरकृतिः ॥ २१३ ॥

........ग्गिकदन्तुज्जळलक्खारससेइओ सुपरिहाणो ।
पत्तंगरत्तचन्दणमञ्जिट्ठाखइरसिग्गुहि ॥ २१४ ॥
पिक्कमहुथोअसरिसवतिळळकरेहि माळिअविक्खिरओ ।
पउरजळधोअविमळो णिप्पीळिअ...णिक्खित्तो ॥ २१५ ॥
कुङ्कुमजळघुसिणासवजिणिउब्भववण्णमासळामोओ ।
पअइत्थ थोअकेसर(सर?)संवळिओ धूइओ कमसो ॥ २१६ ॥
इअ कुमरिकुसुमकेसरणिवहो दसभाअ(विअ ?)कअवेहो ।
ळहुइअघणघुसिणइणो करेइ विविहं विहट्ठाण ॥ २१७॥

... ... उज्वललाक्षारसस्वेदितः सुपरिधानः ।
पत्तङ्गरक्तचन्दनमञ्जिष्ठाखदिरशिग्रुभिः ॥

पक्कमधुस्तोक(सर्षपतैल)कराभ्यां मलितविकीर्णः ।
प्रचुरजलधौतविमलो निष्पीडितरल(?)निक्षिप्तः ॥

कुङ्कुमजलकुङ्कुमासवजनितोद्भटवर्णमांसलामोदः ।
प्रकृतिस्थः स्तोककेसरवलितो (धूपितः) क्रमशः ॥

इ(ति) कुमारी(कुसुम)केसरनिवहो दशभागकृतवेधः ।
(लघू)कृतकुङ्कुमकेसरगुणः करोति विविधविदग्धानाम् ॥

इत्यनेन क्रमेण फलकुमारीपुष्पकिञ्जल्कानां समूहोऽधरीकृतसान्द्रकुङ्कुमस्वभावः व्युत्पन्नानां धनसम्पत्तिं करोति । कथम् । प्रथ(मं ताव)दनुस्कटानलेन क्वथितो यो लोहितदी(प्ति)निष्पन्दस्तस्मिन् स्वेदस्तत उद्धृत्य [illegible] शोधितस्ततः पट्टरागो .... .... .... त्र वल्लीरक्तसारसौभञ्जनैः समांशैः पक्वेन माक्षिकेण ... यया स्वल्पेन सिद्धार्थतैलेनाभ्यक्ताभ्यां मृदितः सन् .... .... बहुसलिलप्रक्षालितो निर्मलः सन् निष्पीडितस्ततः पूर्ववत् .... .... स्वकीयैः काश्मीररञ्जितेन च जलेन तथा वक्ष्यमाणेन कुङ्कुमासवेनोत्पादितच्छायः सान्द्रकुङ्कुमेन स्वापेक्षसमांशपरिमाणेन सम्पादितः संस्कारः । अत्र मात्रा — पत्तङ्गादीनां (फ ?प )लं माक्षिके चत्वारि पलानि चतुर्भागैस्तैलस्य माक्षिकतैलाभ्यां चतुर्गुणं तैलं कुमारिकेसरेभ्यो दशमांशं कुङ्कुमस्य । चतुर्भिः कुलकम् ॥ २१४–२१७ ॥

तद्देवच्चिअ परिकम्मञ्जवगोहुमकलमसेविधण्णाण।
एकस्स घुसिणकरणअंकुराणि(रअ ? अर)स्स इच्छाए॥२१८॥

तदेव परिकर्म यवगोधूमशालिशिम्बधान्यानाम् ।
एकस्य कुङ्कुमकरणेनाङ्कुरनिकरस्येच्छया ॥

यवादीनां सम्बन्धिनः सूक्ष्मप्रथमाङ्कुरसमूहस्यैकतमस्य स्वाभिप्रायेण काश्मीरकस्योत्पादने पूर्वगाथोक्तमेवं विधानं कार्यम् । यवादीनामङ्कुरनिकरः पूर्वोक्तेन परिकर्मणा कुङ्कुमो भवतीत्यर्थः ॥ २१८ ॥

बहुसो सच्छम्बिलमत्थुधुअणविहिविगअगन्धवण्णाइं ।
सुक्खाइ लहरसेहालिआजलजणिअराआइं ॥ २१९ ॥
पुटविहिणा परि(ण)अबिल्लमज्झसित्थाइ... ॥
पावन्ति सुम्भअकेसराइं णवकुङ्कुमच्छाअं ॥ २२० ॥

बहुशः स्वच्छाम्लमस्तुधावनविधि(ना ?)विगतगन्धवर्णानि ।
(शु)ष्काणि खदिरशेफालिका(क्वथित ?) ज(लेन जनितानि ?
[लजनितरागाणि ॥
पुटविधिना परिणतबिल्वमध्यसिद्धानि कु .... ।
भजन्ति कुसुम्भकेसराणि नवकुङ्कुमच्छायम् ॥

सपापकस्य किञ्जल्कानि प्रत्यग्रकाश्मीरकस्य किञ्जल्कानि प्रत्य........ (की)दृशानि सन्ति । पुनर्निर्मली(कृत)वस्त्रदधिमण्डक्षालनकर्मणा .... निष्ठ ...... मोदच्छायानि ततः परिधानानि खदिरशेफालिकाभ्यां....तापवृत्ताभ्यामुत्पादितलौहित्यानि ततः पुटपाकविधानेन प्रागु(सि? के)न पक्वस्य निष्कुषितसारं गर्भे स्विन्नानि ततोऽकृत्रिमेण दशमांशेन कुङ्कुमेन कृतवेधानीति युगलकम् ॥ २१९,२२० ॥

**अहिण(अ?)अगहिउज्जळदीहकेसरं सत्थुव्वअणसंसिद्धं ।**
**वत्थणिअत्थं जळवाहिणिविहिअं रअणिपरिवसिअं ॥२२१॥**
**गुळ(जळ)सिद्धं बहुसो दहणाम्रिप्पिधूविअविसुद्धं ।**
**कुङ्कुमछब्भाअजळेण भाविअं सत्तवाराओ ॥ २२२ ॥**
**(अ?सु)वडन्तवण्णपरिमळकेसरसट्ठाण(विअं? बीअ)संवळिअं ।**
**होइ कुसुम्भच्चिअ तुळिअकुङ्कुमं जणि(ध)बहुविहवं ॥ २२३ ॥**

अभिनवगृहीतोज्ज्वलदीर्घकेसरं वस्त्रधावनसंसिद्धम् ।
व(स्त्रं? स्त्र)विबद्धं जलवाहिनीविनिहितं रजनिपर्युषितम् ॥
गुळजलसिद्धं बहुशो ददाके (?) शुक्तिधूपनविशुद्धम् ।
कुङ्कुमषड्भागजलेन भावितं सप्तवारान् ॥
सुघटमानवर्णपरिमलकेसरसंस्थानबीजसंवलितम् ।
भवति कुसुम्भमेव तुलितकुङ्कुमं जनितबहुविभवम् ॥

कुसुम्भकिञ्जल्कमेव स्पर्धितकाश्मीरमत एवोत्पादितभूरिधनसमृद्धिः सम्पद्यते । कीदृशम् । प्रथमं तावत् प्रत्यग्राणि गृहीतानि लोहित(पि? पी)तानि किञ्जल्कानि यस्य तादृशम् । .... .... ण्डप्रक्षालनेनापनीतस्वगन्धवर्णत्वात् सं(सि)द्धं ततः कर्पटान्तरग्रथितं वहति जले विशि .... .... मिश्रेण जलेन स्विन्नं ततः पूर्वो(क्त)क्रमेण काश्मीरके वर्णविशेषत्वेन दत्तधनखेन (?) दत्तधूपं सविधानं पश्चादकृत्रिमेण कुङ्कुमेन स्वोरस्या षड्भागांशपरिमाणेन रञ्जितं यज्जलं तेन पुनःपुनरार्द्रीकरणविधिना सप्तकृत्वो दत्तभावनं ततः सुष्ठु सम्पन्नकान्त्यामोदानि किञ्जल्करूपाणि तादृशेन कृत्रिमेण बीजभूतेन दशमांशपरिमाणेन मिश्रितमिति त्रिभिः कुलकम् ॥ २२१– २२३ ॥

घणसवरमुणाळवारिसेळेअअसञ्जुत्तए कअसेसं ।
सळिळम्मि सोसिअ .... .... .... .... .... ॥ २२४ ॥
ळक्खारस(सो ? से)अएहि जणिअमणोहरवण्णअं .... ।
कुङ्कुममिणमो करेह ळडहविळासिणिजोग्गअं ॥ २२५ ॥

घनशवरमृणालवारिशैलेयकसंयुक्तं कृतस्वेदम् ।
सलिले शोषितं सकुसुम्भम् .... .... .... ॥
लाक्षारस(मेतै ? सेकै)र्जनितमनोहरवर्णकम् ।
कुङ्कुममिदं कुरुत लटहविलासिनीयोग्यम् ॥

श्रेष्ठं कुसुम्भमेवं सुन्दरलीलावतीसमुचितं काश्मीरकं सम्पादयत । कीदृशं सत् । पूर्वं मुस्तालोध्रोशीरजलशिलापुष्पैः सहिते जले स्विन्नं ततः परिवापितं ततोऽलक्तकनिष्पन्दस्य सेकैरुत्पादितहृद्यच्छायमिति ॥ २२४,२२५ ॥

छाआसोसिअमक्कोळकेसरं कुसुमसारदळमळिअं ।
किंसुअरसकक्कविअं विक्खित्तं वेणुदळअम्मि ॥ २२६ ॥

कुसवङ्कवेढिअं विगअधूमवणछाणजळणकअसेअं ।
सुक्खं (गोमअ)सळिळेण भाविअं कुङ्कुमं होइ ॥ २२७ ॥

छायाशोषितमङ्कोलकेसरं कुसुमसारदलमलितम् ।
किंशुकरसार्द्रीकृतं प्रक्षिप्तं वेणुदलके ॥

कुशपङ्कवेष्टितं विगतधूमवनशुष्कगोमयज्वलनकृतस्वेदम् ।
शुष्कं गोमयसलिलेन भावितं कुङ्कुमं भवति ॥

इरिपुष्पकिञ्जल्कमेव काश्मीरं सम्पद्यते । कीदृशं सत् । प्रथममनातपदेशे शोषितं, ततो माक्षिकेण मनाङ्मृदितं, ततः पश्चात्पुष्परसेन सिक्तं ततो वंशनाभ्यन्त(रे) न्य(स्त ? स्तं, त)तस्तां वंशनालीं कुशदर्भैः समन्ततो वेष्टयित्वा नलिनीकर्दमेन चोपरि लिप्तं, शुष्कारण्यगोमयकृतविधूमकरीषाग्नौ स्विन्नं ततः परिधानं सद् भक्त्रिमकुङ्कुममिश्रेण जलेन कृतभावनमिति युगलकम् ॥ २२६, २२७ ॥

पुणरुत्तघत्तपंचुअणविअणघिगळिअयणआमोअं ।
फढउज्जळहरसारसेहाळिआरसरत्तअं सिद्धं ॥ २२८ ॥

**बिल्लाइअम्मि पुड .... .... विहिणाअकुसुम्भअं ।**
**कुङ्कुमदसभाअसलिलभाविअं घुसिणोल्लअं ॥ २२९ ॥**

पुनरुक्तवस्त्रपावनविगलितवर्णामोदम् ।
कथितोज्ज्वलखदिरसारश्रेफालिकारसाक्तं सिद्धम् ॥
बिल्वादि(कं ? के) पुटपाकविधानकुसुम्भम् ।
कुङ्कुमदशभागसलिलभावितं कुङ्कुमम् ॥

शोभनयावकमेव कुङ्कुमं सम्पद्यते । कीदृशं सत् । पूर्वं पुनः पुनर्दधि-मण्डमजलेन निवृत्तनिजकान्तिसौरभं, ततः कथितगायत्रिकाष्ठस्य तथा ताम्र-चूर्णसम्बन्धिना रसेन रञ्जितं, माल्लूरकपित्थादीनामेकतमस्य गर्भे पूर्वोक्तयुक्त्या पुटपाकेन स्विन्नं, ततस्ततो निष्कृष्याकृत्रिम(कुङ्कुमेन) स्वापेक्षया दशांश-परिमाणेन सप्तवारान् जलमिश्रितेन रञ्जितमिति ॥ २२८, २२९ ॥

**महुगुळपङ्क(क)उहप्पसूअचुण्णमळमीसिअमरुणकराविपक्कं ।**
**लहुघुसिणतुहिणमाळाविद्धं घुसिणासवं कुणह ॥ २३० ॥**

मधुगुलपङ्कककुभप्रसूनचूर्णकरोन्मिश्रमरुणकरविपक्वम् ।
लघुकुङ्कुमतुहिनमालाविद्धं कुङ्कुमासवं कुरुत ॥

इदमुक्तानां कृत्रिमकुङ्कुमानां संस्कारार्थमासवं साधयत । किं तत् । माक्षिकस्य पलाष्टकम् अर्जुनपुष्पाणां चूर्णस्य गुड्या सहितं ततः पक्षमात्रं सूर्यरश्मिभिः प्रभातातपेन पक्वं ततः कुङ्कुमकर्पूरस्पृक्कादिदत्तवेधमिति ॥ कुङ्कुमकृतिः ॥ २३० ॥

**तुससलिलपञ्चपळ्ळवमज्झविपक्काइ सत्तदिअहाइं ।**
**णिंबतरुसारखण्डाइ लोहसरिसाइ जाअन्ति ॥ २३१ ॥**

तुषसलिलपञ्चपल्लवमध्यविपक्वानि सप्तदिवसानि ।
निम्बतरुसारखण्डानि लोहसदृशानि जायन्ते ॥

पिचुमन्दवृक्षशकलान्यगरुसमानि सम्पद्यन्ते । कीदृशानि सन्ति । काञ्जिकस्य पूर्वोक्तैः पञ्चभिः पल्लवैः सहितस्य मध्ये क्वाथयुक्त्या क्वथितानि । सप्ताहोरात्रात् प्रतिदिनं नवनवपञ्चपल्लवयोगेन काञ्जिकं क्वथनीयमिति ॥ २३१ ॥

(घ ? ळ)हुसरिसरइअखण्डे सिंसवसारं (मि ? ति)रत्तमुक्क-
[ड्डिओ ।
पळ्ळवजळम्मि बहुसो कुट्ठासवभाविअणविमुक्को ॥ २३२ ॥
पुडयिहिणा सळ्ळइसर(स)दारुखण्डोअराम्मि परि(वि?)पक्को ।
ळहुइअकाळाउरुधूमपरिमळो होइ डज्झन्तो ॥ २३३ ॥

लघुसदृशरचितखण्डः शिंशपासारश्चिरात्प्रमुक्तकथितः ।
पल्लवजले बहुशः कुष्ठासवभावितः शुष्कः ॥
पुटविधिना सल्लकिसरसदारुखण्डोदरे परिपक्वः ।
लघूकृतकालागरुधूमपरिमलो भवति दह्यमानः ॥

मण्डलप(चित्र ? त्रि)का(र्या ? याः) सारः काष्ठं दह्यमानः सन्नधरीकृत-कृष्णागरुधूपामोदः सम्पद्यते । कीदृशः । अगरुतुल्यानि निर्मितानि शकलानि यस्य तथा, विधिना कुन्दुरुकोष्ठाभ्यन्तरे स्विन्न इति युगलकम् ॥२३२, २३३॥

सुरदारुसरससळ्ळइगोमअकुट्ठाण खण्डिअं एक्काण ।
णववा(स ? म)क्कूरणिहिअं पिपीलिभक्खादि(अ)म(ण ? णु)-
[सहिअं ॥ २३४ ॥
सत्ताहं सुरहीजळकाढि(अ ? अं) गोट्ठम्मि णिहिअमअणमिणं
पळ्ळवजळकञ्जिअगुरुकाढिअमअरुं विसेसेइ ॥ २३५ ॥

सुरदारुसरससल्लकीगोमयकाष्ठानां खण्डितमेकम् ।
नव(वा)माल्लूरनिहितं पिपीलकखादितम(नु ? णु)सहितम् ॥
सप्ताहं सुरभीजलक्वथितं गोष्ठे निहितमयनमिदम् ।
पल्लवजलकाञ्जिके गुरुकथितमगरुं विशेषयति ॥

देवदारुमीडाकुन्दुरुं विशेषयति । देवदारुमीडाकुन्दुरुकीनां तथा गोमयाख्यस्य निर्यासस्य वृक्षविशेषस्य काष्ठस्य तथा विषाणस्यैषामेकतमस्य काष्ठं शकलीकृतं सदेवंविधं लोहमतिशेते । ततो विशिष्टतगरगन्धो भवतीत्यर्थः । कीदृशम् । मत्यमवल्मीकनिखातं ततस्तद्वर्तिभिः पिपीलकैः खादितं मुक्तोच्छिष्टेन अणुना सूक्ष्मेण चूर्णरूपेण भागेन संयुक्तं ततः सप्ताहोरात्रान् गोमूत्रेण पक्वं ततो गोनिवासस्थाने षण्मासाद् भूतले निखातं तत उद्धृत्य क्वाथयुक्त्या पल्लवक्वथितेन जलेन सहितम् । यत्तु सेकं तन्मध्यनिश्चिता(?) कृत्रिमेण मद्द क्वथितमिति युगलकम् ॥ २३४, २३५ ॥

कड्ढच्छिण्णविसाळसाहसळ्ळमाळूइन्धअं (?) ।
कअसुसिरमगुरुसणाहजिण्णसुरासंपुण्णअं (चुण्णं) ॥२३६॥

णिअखण्डणिरुद्धदारमुवरि सळ्ळीविअजोळणअं ।
जाअइ इमिणा (का? क)मेण काळाउरुपडिरूवं ॥ २३७ ॥

उच्छल्लीविपाणशाखासल्लकीमूलाबन्धम् ।
कृत(शिशिर? सुपिर)मगुरुसनाथजीर्णसुरासम्पूर्णं (चूर्णम्) ॥

(वी? नि)जखण्डनिरुद्धद्वारमुपरि प्रदीपितज्वलनम् ॥
जायते तेन क्रमेण कालागरुप्रतिरूपम् ॥

अधोभागात् कृतं विस्तीर्णशिखं यत् कुन्दुरुकीमूलं तत् कृष्णागुरुप्रतिनिधिः सम्पद्यते । कीदृशं सत् । प्रथमं तत्रस्थमेवोत्किरणेन कृतविवरं ततः अगुरुचूर्णसंयुक्तया पुराणमदिरया भरितं ततः स्वेनैव केनचिद् भागेनैनं स्थगितविवराग्रभागं भूम्यन्तरस्थमेव भूमिपृष्ठे प्रज्वलितानलमिति ॥ अगुरुकृतिः ॥ २३६, २३७ ॥

समपञ्चखउरकररुहकुसुमपसूणेहि सिंसवं तिउणं ।
काअळ्ळं गुळमहुम्मीसिअं तेळ्ळपत्तम्मि काऊ ॥ २३८ ॥

सूरकरणिअरताविअं मासम(व)णितळणिहिअं ।
होइ तुरुक्कं चळचळणविद्धमइमासळामोअं ॥ २३९ ॥

समपञ्चनिर्यासकररुहकुसुमप्रसूनेभ्यः शिंशपां त्रिगुणाम् ।
ततश्चूर्णं गुलमधून्मिश्रितं तैलपात्रे कृत्वा ॥

सूर्यकरनिकरतापि(ता? तं मासम)वनि(तल)निहितम् ॥
भवति तुरुष्कं चलचरणविद्धमतिमांसलामोदम् ॥

एवं कृत्वा सिल्हकं सम्पद्यते । कीदृशम् । उक्तपरिकर्मणि कृते सति सिल्हकस्य चतुर्थांशेनानुविद्धमत एवात्यन्तसान्द्रसौरभम् । किं कृत्वा । मण्डलपात्रिकाकाष्ठरूपामेवंविधां कृत्वा । कीदृशीम् । पिष्टाम् । किम्भूतां सतीम् । समांशेभ्यः कुन्दुरुसर्जरसश्रीवासबोलगुग्गुलुभ्यः पञ्चभ्यो निर्यासे तथा नखाञ्जनपुष्पाभ्यां समसमांशामेव त्रिगुणं (?) ततो गुलमाक्षिकद्वाभ्यामुभिश्चूर्णमालोडितं यत्र

तैलमभूत् तादृशेन भाजनगे न (?) पक्षमात्रे रविकिरणेन कथितं ततः पक्षद्वयं क्षित्यन्तरे निखातमिति ॥ २३८, २३९ ॥

सिरिमाळकुन्दचन्दणमुरसल्लइकुट्ठरोहिणिणहेहि ।
समहूहि समेहि सिवापाआहिअ(पा? भा)असरिसेहि
[॥ २४० ॥
(ति? दि)उणिअसिंसवचुण्णेहि पिण्डसमसीहुमहुविपक्केहि ।
होइ तुरुक्कं केसरदमणअच(उ? ळ)पाअभाएहि ॥ २४१ ॥

श्रीमालकुन्दचन्दनमुरासल्लकिकुष्ठरोहिणिनखैः ।
समधुरैः समैः शिवापादाधिकभागसदृशैः ॥
द्विगुणशिंशपाचूर्णैः पिण्डसमशीधुमधुविपक्वैः ।
भवति तुरुष्कं केसरदमनकचलपादभागैः ॥

सिल्हकं सम्पद्यते । कैः । श्रीवास(कुन्दचन्दनमुरा)कु(न्दु)रुकिकाष्ठ-कुवलयकटुकाकररुहैः । कीदृशैः । सुगन्धमुरया सहितैः सर्वैः समांशैस्तथा हरीतक्याः पादाधिकेन भागेन संयुक्तैरित्यर्थः । ततो द्विगुणितं मण्डलपत्रिका-चूर्णं येषां तथाविधैः । यावन्त्येतानि सर्वाणि द्रव्याणि ततो द्विगु(ण? णं) शिंशपाचूर्णमित्यर्थः । पिण्डेन सर्वद्रव्यसमुदायानां तुल्यपरिमाणे शीधुमाक्षिके । ताभ्यां पक्वैः । तथा कुवलीतापससिल्हकयोश्चतुर्थांशो येषां तादृशैरिति युग-लकम् ॥ २४०, २४१ ॥

समतुलिअमाळसल्लइसिरि(या?)वासअदुग्गकुन्दभा-
[एहि
पञ्चउणसिंसवासारयउलकुसुमेहि कअचुण्णं ॥ २४२ ॥
करुरुहगुळमहुवि(द्ध? द्धं) णिक्खित्तं सरसवेणुणाळीहि ।
पुडविहिसि(द्धम? द्धं) बीअम्मि होइ सुहपरिमळं तिळ्ळं
[॥ २४३ ॥

समतुलितमालसल्लकिश्रीवासदुर्गकुन्दभागैः ।
पञ्चगुणैः शिंशपासारवकु(लैः? ल)कुसुमैः कृतं चूर्णम् ॥
कररुहगुलमधुविद्धं निक्षिप्तं सरसवेणुनाल्याम् ।
पुटविधिसिद्धं बी(जमपि? जे) भवति शुभपरिमलं तैलम् ॥

उत्कृष्टामोदं सिल्हकमेवं सम्पद्यते । कीदृशम् । तुल्यपरिमाणैः सर्जरसकुन्दु-रुकीक्षाहपीडाश्राव(?)गुग्गुलुकुन्दुरूणां भागैः । कीदृशैः । पञ्चगुणमण्डलपत्रि-

कइच्छिण्णविसालसाहसल्लमाळूइन्धअं (?) ।
कअसुसिरमगुरुसणाहजिण्णसुरासंपुण्णअं (चुण्णं) ॥२३६॥

णिअखण्डणिरुद्धदारसुवरि सळ्ळीविअजोळणअं ।
जाअइ इमिणा (का? क)मेण काळाउरुपडिरूवं ॥ २३७ ॥

उच्छल्लीविषाणशाखासल्लकीमूलावन्धम् ।
कृत(शिशिर ? सुषिर)मगुरुसनाथजीर्णसुरासम्पूर्णं (चूर्णम्) ॥

(वी ? नि)जखण्डनिरुद्धद्वारमुपरि प्रदीपितज्वलनम् ॥
जायते तेन क्रमेण कालागरुप्रतिरूपम् ॥

अधोभागात् कृतं विस्तीर्णशिखं यत् कुन्दुरुकीमूलं तत् कृष्णागुरुप्रतिनिधिः सम्पद्यते । कीदृशं सत् । प्रथमं तत्रस्थमेवोत्किरणेन कृतविवरं ततः अगुरुचूर्णसंयुक्तया पुराणमदिरया भरितं ततः स्वेनैव केनचिद् भागेनैनं स्थगितविवराग्रभागं भूम्यन्तरस्थमेव भूमिपृष्ठे प्रज्वलितानलमिति ॥ अगुरुकृतिः ॥ २३६, २३७ ॥

समपञ्चअखउरकररुहकुसुम्भपम्भूणेहि सिंसवं तिउणं ।
काअळ्ळं गुळमहुम्मीसिअं तेळ्ळपत्तम्मि काऊ ॥ २३८ ॥

सूरकरणिअरताविअं मासम(व)णितळणिहिअं ।
होइ तुरुक्कं चळचळणविद्धमइमासळामोअं ॥ २३९ ॥

समपञ्चनिर्यासकररुहकुसुम्भप्रसूनेभ्यः शिंशपां त्रिगुणाम् ।
ततश्चूर्णं गुलमधून्मिश्रितं तैलपात्रे कृत्वा ॥

सूर्यकरनिकरतापि(ता ? तं मासम)वनि(तल)निहितम् ॥
भवति तुरुष्कं चलचरणविद्धमतिमांसलामोदम् ॥

एवं कृत्वा सिह्लकं सम्पद्यते । कीदृशम् । उक्तपरिकर्मणि कृते सति सिह्लकस्य चतुर्थांशेनानुविद्धमत एवात्यन्तसान्द्रसौरभम् । किं कृत्वा । मण्डलपात्रिकाकाष्ठरूपमेवंविधां कृत्वा । कीदृशीम् । पिष्टाम् । किम्भूतां सतीम् । समांशेभ्यः कुन्दुरुसर्जरसश्रीवासबोलगुग्गुलुभ्यः पञ्चभ्यो निर्यासे तथा नखाञ्जनपुष्पाभ्यां सप्तसमांशानामेव त्रिगुणं (?) ततो गुलमाक्षिकशीधुभिश्चूर्णमालोडितं यत्र

तलमभूत् तादृशेन भाजनगे न (?) पक्षमात्रे रविकिरणेन कथितं ततः पक्षद्वयं क्षित्यन्तरे निखातमिति ॥ २३८, २३९ ॥

**सिरिमालकुन्दचन्दणमुरसल्लइकुट्ठरोहिणिणहेहि ।**
**समहुहि समेहि सिवापाआहिअ(पा? भा)असरिसेहि [॥ २४० ॥**
**(ति?दि)उणिअसिंसपचुण्णेहि पिण्डसमसीहुमहुविपकेहि ।**
**होइ तुरुक्कं केसरदमणअच(च ? ळ)पाअभाएहि ॥ २४१ ॥**

श्रीमालकुन्दचन्दनमुरासल्लकिकुष्ठरोहिणिनखैः ।
समधुरैः समैः शिवापादाधिकभागसदृशैः ॥
द्विगुणशिंशपाचूर्णैः पिण्डसमशीधुमधुविपक्वैः ।
भवति तुरुष्कं केसरदमनकचलपादभागैः ॥

सिल्लकं सम्पद्यते । कैः । श्रीवास(कुन्दचन्दनमुरा)कु(न्दु)रुकिकाष्ठकुवलयकटुकाकररुहैः । कीदृशैः । सुगन्धमुरया सहितैः सर्वैः समांशैस्तथा हरीतक्याः पादाधिकेन भागेन संयुक्तैरित्यर्थः । ततो द्विगुणितं मण्डलपत्रिकाचूर्णं येषां तथाविधैः । यावन्त्येतानि सर्वाणि द्रव्याणि ततो द्विगु(ण ? णं) शिंशपाचूर्णमित्यर्थः । पिण्डेन सर्वद्रव्यसमुदायानां तुल्यपरिमाणे शीधुमाक्षिके । ताभ्यां पक्वैः । तथा कुवलीतापससिल्लकयोश्चतुर्थांशो येषां तादृशैरिति युगलकम् ॥ २४०, २४१ ॥

**समतुलिअमालसल्लइसिरि(या ?)वासअदुग्गकुन्दभा- [एहि**
**पञ्चउणसिंसवासारचउलकुसुमेहि कअचुण्णं ॥ २४२ ॥**
**कररुहगुळमहुवि(द्ध?द्धं) णिक्खित्तं सरसवेणुणाळीहि ।**
**पुडविहिसिसि(द्धम ?द्धं) वीअम्मि होइ सुहपरिमळं तिळ्ळं [॥ २४३ ॥**

समतुलितमालसल्लकिश्रीवासदुर्गकुन्दभागैः ।
पञ्चगुणैः शिंशपासारचकु(लैः ? ल)कुसुमैः कृतं चूर्णम् ॥
कररुहगुलमधुविद्धं निक्षिप्तं सरसवेणुनाल्याम् ।
पुटविधिसिद्धं बी(जमपि ? जे) भवति शुभपरिमलं तैलम् ॥

उत्कृष्टामोदं सिल्हकमेवं सम्पद्यते । कीदृशम् । तुल्यपरिमाणैः सर्जरसकुन्दुरुकीङ्काहपीडाश्चव(?)गुग्गुलकुन्दुरूणां भागैः । कीदृशैः । पञ्चगुणमण्डलपत्रि-

काकाष्ठकेसरकुसुमानि येषां (तैल ? तैः) सम्पादि(तं) चूर्णम् । ततो नखगुलमाक्षि-कक्कतवेधं सद् आर्द्रवंशनालिकाभ्यन्तरे न्यस्तं ततः पूर्वोक्तपुटपाकविधिना स्विन्नं बीजे सति सिल्हकांशेन रहितमपि तद्रूपं भवतीति युगलकम् ॥ २४२, २४३ ॥

णरणाहविलासाइसाणजळजळहरवत्थआ(?) ।
सहिआ पुरकळ्ळएहि समंसिंसवअसणाहआ ॥ २४४ ॥
कअचूडसगुळसीहुकुसुमरसोल्लिआदेहआ ।
भणिआ दळजोअम्मि थोअतुरुक्कम्मीसिआ ॥ २४५ ॥

नरनाथविपाणे साकजलजलधरवृक्षाः ।
सहिताः पुरकललाभ्यां समांशिशपासनाथाः ॥
कृतचूडासहेळंसीधुकुसुमार्द्रीकृतदेहाः ।
भणिता दलयोगे स्तोकतुरुष्कोन्मिश्रिताः ॥

एते सिल्हकस्य योजनायां कथिताः । एतैर्युक्तं सिल्हकं सम्पद्यत इत्यर्थः । के ते । तगरकुष्ठसर्जरसमुस्ताबालकदेवदारवः समां(शाभिः ? शाः) । कीदृशाः । गुग्गुलुमांसीभ्यां समांशाभ्यां युक्तास्तथा सर्वेषां तुल्यपरिमाणया मण्डलपत्रिकया संवन्धिताः सन्तश्चूर्णितास्ततः सगुलेन सीधुना माक्षिकेण चालोकित (उशीरा ? शरीराः) ततः परिमितेऽपि सत्येतेन सिल्हकेन योजिता इति ॥ २४४, २४५ ॥

जंबूदळजळ(सोअ)लिअं तिहळासलिळेण भाविअं बहुसो ।
तिण्णघइजणिअवण्णं वउळासववत्तिआमोअं ॥ २४६ ॥

जम्बूजलधरमलितं त्रिफलासलिलेन भावितं बहुशः ।
तैलमतिजनितवर्णं वकुलासववर्तितामोदम् ॥

अतिशयेनोत्पादितस्वकान्ति तथा वक्ष्यमाणेन वकुलासवेन विशेषित-सौगन्ध्यं सिल्हकं भवतीति । कीदृशं सद् । राजजम्बूपल्लवरसेन मनाक् स्पृष्टं तथा हरीतकीविभीतामलकैः काथयुक्त्या कथि(तोये ? ते)न पुनः पुनरार्द्रीकृतं शोषणक्रमेण दत्तभावनमिति ॥ २४६ ॥

सळ्ळइमाळूर(ज्ज ? ज्जु)णसिंसवतरुवक्कलाण पक्केण ।
कअपरिअम्मेण दळं सामण्णं सिळ्ळजुत्तीणं ॥ २४७ ॥

सल्लकीमालूरार्जुनशिंशपातरुवल्कलानामेकेन ।
कृतपरिकर्मणा दलं सामान्यं सिल्हकयुक्तीनाम् ॥

सिल्हकक्कतसाधारणानां दलं सारमिदम् एकेन वस्तुना भवति । कुन्दुरुकीबिल्वककुभमण्डलपत्रिकाख्यानां चतुर्णां वृक्षाणां ये त्वग्भागास्तेषामेकतमेन । कीदृशेन । सम्पादनशोधमचूर्णेन करणादिसंस्कारेणेति ॥ २४७ ॥

ससि(मी ? म)रिअचुण्णकुण्ठिअकेसरचुण्णेहि मह्गुणि·
[हितेहि ।
होइ वउलासवो जउमारिअदढभंडविणिएहि ॥ २४८ ॥

शशिमरिचचूर्णगुण्ठितः केसरचूर्णैर्मधुनिहितैः ।
भवति बकुलासवो जतुमारितदृढभाण्डविनिहतैः ॥

समं बकुलासवो भवति । कैः । कर्पूरतीक्ष्णमो रजसा वचूर्णितै बकुलपुष्पचूर्णैर्मधुनिहितैः तथा प्रविलिप्तलाक्षा(रसे) अभमभाजने न्यस्तैः । कृत्रिमसिल्हकानां संस्कारार्थमयमासव इति ॥ सिल्हकक्कतिः ॥ २४८ ॥

जळजळहरकुटिलाउरुरअणीदळचळपिअंगुतअरेहि ।
सिद्धं णाळिआइ (ज ? जु)अं घणखइरजळुल्लिळ(अ ? अं)
[तिळ्ळं ॥ २४९ ॥

सिअसिचअंचळगळिअं सुन्दरसहआरवेहमत्तेण ।
होइ सहआरतिळ्ळं सव्वश्चिअ मासळामोअं ॥ २५० ॥

जलजलधरकुटिलागुरुरजनीदलचलप्रियङ्गुतगरैः ।
सिद्धं नलिकायां युतं जलखदिरजलार्द्रितं तैलम् ॥

सितांशुकाञ्चलगलितं सुन्दरसहकारवेधमात्रेण ।
भवति सहकारतैलं सर्वमेव मांसलामोदम् ॥

इदं साध्यमानं तैलं श्रेष्ठेन सहकारेण आम्ररसेन विद्धमात्रं समस्तमेव सान्द्रसौरमं सहकारतैलं सम्पद्यते । कीदृशम् । मु(स्त ? स्ता)गायत्रीभ्यां क्वाथयुक्त्या क्वथितेन जलेनार्द्रीकृतं मिश्रितमित्यर्थः । तैलाभयापड्भागमात्रपरिमाणैस्ततः(!) शुक्लवस्त्रान्तरे निक्षिप्तं सत् म(स्तु ? स्नु)तमिति युगलकम् ॥ २४९, २५० ॥

भणिदळकुन्दकन्धरसिरिमाळविसळिळविदुमळआहि ।
पिक्खं फाळितरुतिळमाळुअन्दकसाअस(ञ ? ञ्जु)त्तं ॥२५१॥

सहआरतिळविद्धं पसण्णणवपडुमराअसारिच्छं ।
गन्धाअड्डिअभमरउळमणहरं होइ सहआरं ॥ २५२ ॥

फलिनीदलकुन्दकन्धरश्रीमाल(विशल्या)विद्रुमलताभिः ।
पक्कं कथितरुतैलं सान्द्रकषायसंयुक्तम् ॥

सहकारतैलविद्धं प्रसन्ननवपद्मरागसदृशम् ।
गन्धाकृष्टभ्रमरकुलमनोहरं भवति सहकारम् ॥

विभीतकफलस्यान्तर्वर्तिसारनिष्पीडितं तैलमेवं सहकारं सम्पद्यते । कीदृशम् । प्रथममाम्रवृक्षत्वचा क्वाथयुक्त्या कथितेन जलेन मिश्रीकृतं, ततः एतैः कल्कद्रव्यैः पूर्वोक्तमात्रया गर्भीकृतैः पक्वम् । कैः । प्रियङ्गुगन्धपत्रकुन्दुरुशुष्क- श्रीवासजरसमांसीनलिनिकाभिः । ततः सहकाररसेनैवाकृत्रिमेन कृतवेधमात्रं सौरभातिशयात् स्वच्छपद्मरागतुल्यकान्ति सौरभाहृतमधुकरकुलं च भवतीति युगलकम् ॥ २५१, २५२ ॥

चविडपिसलिलनलिआसोआमणिघुसिणवक्कलसणाहा ।
अहिणवराअंबु(सुरहि)कसाअसाहिअं णिम्मलं तेल्लं
[ ॥ २५३ ॥

माअन्दतेल्लमिणमो विअड्ढचूलामणीदइअं ।
चण्डधिसल्लीअं विदुमच्छाअं .... .... ॥ २५४ ॥
... ... .... ... ...

(अभिनवराजजम्बूसुरभिकषायसाधितं निर्मलं तैलम् ॥)
सहकारतैलमिदं विदग्धचूडामणिदयितम् ।

.... ... .... .... ....

इदं सहकारतैलं सम्पद्यते । किं तद् वस्तु । विशुद्धतैलमेव । कीदृशम् । मत्यमजम्बूसुरभिपत्रकषाययुक्त्या कथितेन जलेन सम्पादितं, ततः एतैर्द्रव्यैः पूर्वोक्तमात्रया गर्भीकृतसंयुक्तम् । कैः । क्रोधनिकामांसीविद्रुमैलाकुङ्कुमत्व- चैस्ततोऽकृत्रिमस्याम्ररसस्य पञ्चमेन भागेन मिश्रितमेव वर्णसौरभातिशयात् प्रवालतुल्यकान्ति मूल्येवबलभमिति युगलकम् ॥ २५३,२५४ ॥

सल्लइत्वउररत्तचन्दणमञ्जिट्ठाणलिणचुण्णकअगब्भा ।
खरनरणिपिक्कं तेल्लं सहआररसतुल्लं ॥ २५५ ॥

संबूकसाअसहिअं उज्जलवण्णअं विद्धम् ।
सहआरेण होइ फुडं महआरअं ॥ २५६ ॥

दनुजेन्द्रसखारिविद्रुमलतासनाथम ।
सौदामिनीकललकुङ्कुमभागोन्मिश्रितं तैलम् (?) ॥
जम्बूकषायसाधितमुज्ज्वलवर्णं विद्रुम् ।
सहकारेण भवति स्फुटं सहकारम् ॥

इदं तैलं प्रकटमेव सहकारत्वमापद्यते । कीद(शः सन् ? शं सत् ।) प्रथमं क्वाथयुक्त्या कथितेन राजजम्बूजलेन सम्पादितं ततो गर्भीकृताहिमुरात्वचा-(ल)कनलिकासंयुक्तं तत एलामांसीविषा(णा)रुणानां समैर्भागैः पूर्वोक्तमात्रया सहितं सत् क्रमतं प्रवोज्ज्वलच्छायं ततः (सद्यसहकारमेवं ?) सहकारेण कृतवेधमिति । सहकारकृतिः ॥ २५५, २५६ ॥

तेळ्ळाळो(हि ? ळि)अपरिणअमाळूरगिरोहि गहिअसुक्खा-[ण ।
विळ्ळाण होइ तिळ्ळं विद्धं कप्पूरतिळ्ळं व ॥ २५७ ॥

तै(ल ? ला)लो(हि ? लि)तपरिणतमालूरगृहाद् गृहीतशुष्काणाम् ।
... ... .... .... .... ॥

तैलार्द्रीकृतात् परिपक्वबिल्वो संज्ञो (?) गृहीतानां तदनु शुष्काणां ततः पीडिता॥।.। कीदृशम् । अकृत्रिमेण कर्पूरपानीयेन कृतवेधं तैलमेवं भवतीति ॥ २५७ ॥

कोमळसितमरिअकन्दकन्दळअसणाहअं ।
सहकुसुमणमट्ठिआइवारहगुणपरिमाणअं ॥ २५८ ॥
कढिअं मळआणळेण ववगअफेणअवन्थअं ।
(धवळंशुअगळिअविमळमहिणवपत्तम्मि णिहिअं ॥ २५९ ॥
कळळैळासारकोमळफळचुण्णंशुअसणाहं) ।
सत्ताहपरिणिट्ठिअं खु गाळिअमणुपसण्णअं ॥ २६० ॥
तिळ्ळं कप्पूरतेळ्ळपच्चासभाउम्मीसिअं ।
ससितिळ्ळमिणं भणन्ति ससिमत्त(क)अवेहं ॥ २६१ ॥

कोमलसितमरिचकन्दतन्तुकन्दलसनाथम् ।
सहमुकृष्णमृत्तिकाद्वादशगुणपरिमाणम् ॥

क्वथितं मृदूनलेन व्यपगतफेनबन्धम् ।
धवलांशुकग(भि ? लि)तविमलमभिनवपात्रनिहितम् ॥
कललैलासारकोमलफलचूर्णांशुकस्तनायम् ।
सप्ताहपरिनिग्रितं खलु गालितमतिप्रसन्नम् ॥
तैलं कर्पूरतैलपञ्चाशद्भागेन्मिश्रितम् ।
शशितैलमिदं भणन्ति शशिमात्रकृतवेधम् ॥

इति । इदं तैलं कर्पूरतैलं कर्पूरपानीयं कथयन्ति । कीदृशं (सं ? सत्) । प्रत्यम-सौभाञ्जनमूलसूक्ष्माङ्कुरसंयुक्तं तथा सुकृष्णया शुक्तिकया सह द्वादशपरिमाणं यस्य तत् तथा । कन्दशुक्तिकयोर्यावान् भा(गा ? ग)स्तावन्तो द्वादशभागास्तैलस्येत्यर्थः । एवंविधमनुत्कटाग्निना क्वथितं फेनोद्भवे सति .... ... .... प्रशान्त(भे ? फे)नावर्तं तत्सितवस्त्रपूतत्वान्निर्मलं ततः सत्यकर्पूरपानीयस्य (योजितं ?) (पञ्चाशद्भागेन) योजितं ततः कर्पूरतैलेनानुविद्धमिति युगलकम् ॥

गळेइअप(त्त्वा ? क्वा)ळिअसोसिआण पत्थतिळाण [कअ(चूर्ण ? चुण्णं)
फच्चूरयवकळे(ळाकळ्ळोळ)सदिशभाएहि ॥ २६२ ॥
दळविउणभाअमीसिअकरेहि संजोतुऊण कुडुवर्द्धं ।
गहिअं पीडणविहिणा तेळ्ळं ससितेळ्ळपडिरूवं ॥२६३॥

ग .... लुञ्छितप्रक्षालितशोषितानां प्रस्थतिलानां कृतचूर्णम् । .
फच्चूरवल्कलैलाकल्लोलसदृशभागैः ॥
दलद्विगुणभागमिश्रीकृतैः संयोज्य कुडुवार्धम् ।
गृहीतं पीडनविधिना तैलं शशितैलप्रतिरूपम् ॥

इदं तैलं कर्पूरतैलस्य प्रतिनिधिः सम्पद्यते । कीदृशम् । निष्पीडनकर्मणा गृहीतम् । कथम् । तिलार्द्धं प्रस्थषोडशपलानि । कीदृशानाम् । प्रस्थ(तिलानां) निस्तुषीकृतानां ततः सुतानां ततः परिवापितानां तादृशानां कीदृशः प्रस्थश्चूर्णीकृतस्तत्भाविधं तिलप्रस्थं कमलत्वचतुर्भिरकालपलानां (!) समैर्भागैः ... ... त्र-कुडुवार्द्ध ... यं मिश्रीकृत्य । कीदृशैः । गन्धपत्रस्य द्वाभ्यां तिलेन सहितैरिति गुग्लकम् । कर्पूरपानीयकृतिः ॥ २६२, २६३ ॥

**कढिआ(इ) पञ्चपळ्ळवकसाअसलिळेण कुलिसकुसुमाइ ।**
**थोअञ्चळपाउजाअञ्च(मिम)ळिआइ ळवङ्गसरिसाइ ॥२६४॥**

क्वथितानि पञ्चपल्लवकषायसलिलेन कुलिशकुसुमानि ।
वोलजलचतुर्जातकमलितानि लवङ्गसदृशानि ॥

सुधाक्षीरवृक्षपुष्पाणि देवकुसुमतुल्यानि जायन्ते । तत्समानवर्णसौरभाणि भवन्तीत्यर्थः । कीदृशानि । पञ्चपल्लवानां क्वाथयुक्त्या गृहीतेन क्वाथपानीयेन क्वथितानि ततः सरह्रीबेरत्वक्सूक्ष्मैलागन्धपत्रनागकेसरैः समांशैर्मर्दितानीति लवङ्गकृतिः ॥ २६४ ॥

**णिच्छाळिअजवदाळि इमणमूमेपिआइ एळादळं ।**
**होइ गनिश्चली....कवचलीतकपायनागवत्स्वे (?)॥ २६५ ॥**

.... ... .... .... .... .... ।
.... ... .... .... .... .... ॥

बहुशः एलादलभावितया एलादलानि भवन्ति । निस्तुषीकृतानां यवानां पूर्णसम्पदा दर्दरके पूर्वोक्तस्वेदभाण्डे जलयेप दत्तस्वदितया (?) .... .... .... .... मन्त्रेण बहून् वारान् कृतभावनयेति एलाकृतिः ॥ २६५ ॥

**कुइजळूकाढिअसोसिआइ पुणरुत्तभाविआइ च ।**
**कुट्ठञ्चिअ होन्ति फुडं हअगन्धाखण्डखण्डाइम् ॥ २६६ ॥**

कुष्ठजलोत्क्वथितशोषितानि पुनरुक्तभावितानि च ।
कुष्ठमेव भवन्ति स्फुटं हयगन्धाखण्डखण्डानि ॥

अश्वगन्धामूलशकलानि (व्या?वा)प्यमेव साक्षात्सम्पद्यते । कीदृशानि सन्ति । वाप्येन पयसा च क्वाथयुक्त्या कषायितेन दत्तकाथानि । ततस्तस्मान्निष्कृष्य परिवापितान्येव पौनःपुन्येन दत्तभावनानीति कुष्ठकृतिः ॥ २६६ ॥

**सहआररसेण गन्धं गङ्कणजळखार(कअ)अफळळित्ते ।**
**पत्तम्मि कलत्रच्छइ पुच्छोचिअ दीहरं काळम् ॥ २६७ ॥**

सहकाररसके भंकणयवक्षारकतकफललिप्ते ।
पत्रे कृतस्तिष्ठन्त्येव · दीर्घकालम् ॥

सहकारतैलं सैन्धवलवणसुवर्णपादिकयाऽवशूकताच्छफलानां (?) पिष्टेन चूर्णेन कृतलेपे निर्मलभाजने स्थापितं सत् बहुकालं निर्मलमेव भवतीति ॥ २६७ ॥

धवलसतपत्त(ते ? के)सरसिन्धुब्भवकुसुमसारसञ्जुत्तो ।
(कणता ? ण कदावि) होइ क(थि ? ठि)णो दुग्गइभी(ळ ? रु)-
[व्व सहआरो ॥ २६८ ॥

धवलशतपत्रकेसरसिन्धूद्भवकुसुमसारसंयुक्तः ।
न कदा(चिद् ? पि) भवति कठिनो दुर्गतिभीरुरिव सहकारः ॥

सहकार एवंविधः सन्नित्यमेव रसरूपत्वान्मृदुरेव भवति, न जातु घनतां याति । यथा दौर्गत्यत्रस्तः कश्चिन्मृदुरेव भवति । कीदृशः सन् । श्वेताब्जकिञ्जल्कसैन्धवलवणमाक्षिकैः सहित इति ॥ २६८ ॥

दढगन्धसंखणाहीचुण्णो चुण्णो व्व दन्तिमूळा(णां ? ण) ।
सुअ(न्न ? ण)हि(अ)अं व विमळणिक्खित्तं कुणइ सहआ-
[रं ॥ २६९ ॥

दृढगन्धशङ्खनाभिचूर्णः (चूर्ण इव दन्तिमूलानाम् ?)
सुजनहृदयमिव विमलं निक्षिप्तं करोति सहकारम् ॥

अयं चूर्णः सहकाररसनिर्मूलः सज्जना(नामा)शयमिव सदै(ल ? व) सम्पादयति (?) । तन्मध्ये न्यस्त(स्स त ? स्त)स्य चूर्णः ॥

*पु(भवति ? टपाक)विधिना सुधु दग्धायाः कम्बोदकस्य नाभेरग्रवर्तिनो नाम्या सहकारस्य भागस्य(?)। अन्यथा निकुम्भरि(शि)फानां चूर्ण एवं करोतीति । सहकारस्थैर्ययुक्तिः ॥ २६९ ॥

मुणिकुसुमजालिणीफलळद्दीमहुअणाळमंकचुण्णेण ।
कुसुमाइ दव.न्ति मिअंकभाअणे रविकिरणसिण्णाइं ॥
[२७० ॥

.... .... .... ... .... .... .... ।
.... .... .... .... .... .... .... ॥

सर्वपुष्पाण्येवंविधानि सन्ति रसरूपमापद्यन्ते । कीदृशानि । अगस्तिवृक्षपुष्पाणां तथा देवताळिफलस्य तथा मधुयष्ट्युशीरांकणानां चूर्णेनावकुण्ठितानि कर्पूरविरचितपात्रस्थापितानि अर्क(त ? क)रभावितानि चेति । सर्वपुष्पद्रावणयुक्तिः ॥ २७० ॥

* अत्र किञ्चिद् गलितमिव प्रतिभाति ।

समहु(परहु ?)परसुच्छिण्णमूळगुण्ठिअं दवइ मल्लिआकु-
[सुमं।
घण्णोअरविणि(विभो ? हिअ)चम्पयतरुकुसुमणि(व्वल ?
[व)हो व्व ॥ २७१ ॥

समधुपरशुच्छिन्नमूलगुण्ठितं द्रवति मल्लिकाकुसुमम् ।
धान्योदरविनिहितचम्पकतरुकुसुमनिवह इव ॥

मदयन्तीपुष्पमेवंविधं द्रवति । कीदृशम् । माक्षिकेणार्द्रीकृतं यत् कुठा-··(तेन छिन्नस्य) छिन्नामूलस्य चूर्णितेन लिप्तम् । कथं द्रवति । यथा चम्पकद्रुमस्य पुष्पं भाण्डस्थितं व्रीहिराशिमध्यस्थापितं सद् द्रवति तथैव भवतीत्युपमानभङ्ग्या द्वितीयः प्रयोग(मु ? उ)क्त इति । मल्लिकाचम्पकपुष्पाणां द्रावणयुक्तिः ॥ २७१ ॥

दढदड्ढमसिणचुण्णिअसंखद्दअरसविलित्तमत्ताइ ।
केअइपत्ताइ रसम्मुअन्ति घम्मे णिहित्ताइ ॥ २७२ ॥

दृढदग्धमसृणचूर्णितशङ्खार्द्ररसविलिप्तमात्राणि ।
केतकिपत्राणि (र)सं मुञ्चन्ति घर्मे निहितानि ॥

केतकीपुष्पाणां पत्राण्येवंविधानि सन्ति जलं मुञ्चन्ति स्यन्दन्ते द्रवन्तीत्यर्थः । कीदृशानि । अतिशयेन प्लुष्टस्य ततः सूक्ष्मपिष्टस्य कम्बोश्चूर्णेनार्द्ररसेन चावगुण्ठितान्येव ततस्तीक्ष्णात(पनिहि)तानीति । केतकिपुष्पद्रावणयुक्तिः ॥ २७२ ॥

इअए सपदि सम(न्तो ? त्तो) णाणाविअगन्धगोरवघविओ ।
हरमेहळाए पूइअपञ्चमठाणो परिच्छेओ ॥ २७३ ॥

इत्ये(तावता सपदि) परिसमाप्तो नानाविधगन्धगौरवव्यधितः ।
हरमेखलायां पूजितपञ्चमस्थान. परिच्छेदः ॥

संग्रहोऽयं प्रयोगाणां पञ्चमस्य निबध्यते ।
तत्राम्बुवासनविधिर्दन्तकाष्ठविधिस्तथा ॥
मधूच्छिष्टविधिर्नेत्रपरिकर्माञ्जनं तथा ।
मुखवासादि तैलानि तथोद्वर्तनसंविधिः ॥
अथ स्नानक्रिया स्नानं स्नानोपकरणानि च ।
पटवासादि वर्त्या च + सुगन्धादिसंविधिः ॥

